*Sri Balamanorama Series No. 28.*

॥ श्रीः ॥

# ॥ भाषाशास्त्रप्रवेशिनी ॥

# BHĀṢĀŚĀSTRAPRAVEŚINĪ

A Handbook of Comparative Philology in Sanskrit
for the use of Sanskrit students

BY

R. S. Venkatarama Sastri, M. A.,
*Professor, Madras Sanskrit College, Mylapore.*

---

PRINTED AND PUBLISHED BY
THE SRI BALAMANORAMA PRESS,
MYLAPORE, MADRAS.

---



---

॥ श्रीः ॥

## ॥ प्रास्ताविकम् ॥

निरवद्याशेषविद्यावल्लरीकल्पभूरुहान् ।
श्रीमत्कुप्पुस्वामिनाम्नो नत्वा कुर्वे प्रवेशिनीम् ॥

अथ किंचिदिव शास्त्रान्तरमिश्रणप्रभवमिदं वर्वर्ति भाषाशास्त्रं नाम नैकौषधिसंस्कृतं रसायनमिव । तथाहि—दृश्यतेऽत्र चरित्रांशः तत्तद्देशकालावच्छेदेन तत्तद्भाषाव्यवहर्तॄणां चरित्राधिजिगमिषायां, तथैव मानुषमुख्यस्वभावस्य भाषणस्य ऐदम्पर्येण विचारणायां भौतिकशास्त्रांशः, उच्चावचभिन्नानां भाषानिकुरुम्बाणां परस्परभावनया पुराणमातृभाषोन्नयने तत्त्वचर्चांशः—इत्येवमादि ॥

शास्त्रेऽस्मिन्नवलम्बितो विचारप्रकारः तत्तद्भाषानियतव्याकरणाद्गतप्रकाराद्भिद्यते । प्रायशस्तावत् तत्तद्भाषानियतव्याकरणेषु भाषाघटकपदतत्समभिव्याहारादीनां सौष्ठवासौष्ठवे ईदृक्तेयत्ते च केवलं निर्णीयेते । भाषाशास्त्रे पुनः न केवलं पूर्वोक्तं, परं तु कथंकारं तादृक्ता इत्यपि विचार्यते । तादृशविचारणेन भाषाणां परस्परपर्यालोचनया यदिदं भाषानुगत्यं तत् को वाऽमूढ आधुनिको मनसि न कुर्यात् ॥

तादृशमिदं भाषाशास्त्रं पूर्वस्मिञ्छतकेऽस्मिंश्च वर्धितं सादरं सेव्यते शाब्दिकरसिकैः । विशिष्य प्रायशो विद्यास्थानेष्वध्याप्यते ॥

संस्कृतसाहित्यमात्रविश्रान्तानां विशिष्य शिरोमण्यादिपरीक्षोत्तितीर्षूणां तत्राधीतिनां सुखबोधाय भाषाशास्त्रपरिभाषाः प्रवेशिन्यामस्यां सन्ति संदृब्धाः । वाण्यां गैर्वाण्यामेतादृशग्रथनं

विरलविरलमिति नैव नानुभूतिः समेषाम्, यतोऽसौ मे प्रवृत्तिः। संदृब्धाश्चात्र विषयाः प्रायशः एम्. ए. परीक्षार्थं मद्रपुरीराजकीयमहाकलाशालायां छात्रान्यतमत्वमवलम्बितवता मया, तत्रभवतां महामहोपाध्यायादिबिरुदावलीमण्डनानामाचार्यवर्याणां ब्रह्मश्रीयुत-कुप्पुस्वामिशास्त्रिचरणानाम् उपन्यासेभ्यः क्रोडीकृतचरा एव। कौतस्कुता अपि भगवत्पाणिनिव्याकरणपथमासाद्यैव भाषाशास्त्रमुत्तेजयामासुरिति प्रमाणसिद्धे, किमिति पाणिनीयैरेव शास्त्रमिदं न सम्यगधीतं स्यादिति, दक्षिणभारतवर्षे संस्कृतजीवातूनामाचार्यवर्याणां तेषामनुभावेनैव सरसं परिपोषितमिदं भाषाशास्त्रं संचारितं चेत्यत्र को वा संदेग्धि प्रामाणिकः?

अत्र निबद्धा विषयाः सर्वेऽपि वर्तन्ते आधुनिकशाब्दिककविमर्शानुसारं, यथाशक्ति भगवत्पाणिनिमतसामरस्यसंपादनदिक्प्रदर्शनं च कृतमिदानीमिति नैव विस्मर्तव्यं सहृदयैः पाणिनीयैः॥

अत्र मुद्रणपट्टिकाप्रमादादिदोषसंशोधनेन बहूपकृतवद्भ्यो मित्रमणिभ्यो ब्रह्मश्रीयुत—सि. शङ्कररामशास्त्रिभ्यो मदीयं कार्तज्ञ्यमाविष्करोमि॥

एतादृशपुस्तकमुद्रणे दोषास्पृष्टतासंपादनं नाम दुश्शकमिति, यदि कतिचन दोषा वर्तन्ते, तान् क्षाम्यन्तु सहृदया विद्वांसः—इति शिवानुध्यानमेव शरणम्॥

मैलापूर्, मद्रास्।
१५-२-१९३८

र. सु. वेङ्कटरामशास्त्री
मद्रपुरीसंस्कृतमहाकलाशालाध्यापकः

॥ श्रीः ॥

# ॥ भाषाशास्त्रप्रवेशिनी ॥

---

## ॥ उपोद्घातः ॥

### ॥ शास्त्रारम्भसमर्थनम् ॥

अथ यद्यपि तत्तद्देशकालाद्यवच्छेदेन व्यवहाराय भाषाभेदो वरीवर्ति, तथा तत्तद्भाषानियततया व्याकरणादिभेदः, तथापि भाषात्वावच्छेदेन अनुगता अधिगन्तव्या विषया वर्तन्त एव, यद्विषयं भाषाशास्त्रम्; यथा पृथिव्याद्याकारेण भिन्नानामपि भौतिकत्वाद्याकारेण भौतिकादिशास्त्रम्। भाषाशास्त्रेऽस्मिन् अवलम्बिता विचारप्रकारा भौतिकादिशास्त्रतुल्यमेव वर्तन्ते। यथा च पार्थिवशास्त्रे पार्थिवांशाः सर्वेऽपि सप्रपञ्चं विचार्य निर्णीयन्ते, तथैव भाषाशास्त्रे भाषाणां चरित्रं, परस्परं तासां संबन्धः साजात्यवैजात्ये इत्येवमादि विचार्यते ॥

अनारतमेवं पृच्छ्यते शाब्दिकवरैः—किमर्थं वयमेवं व्यवहरामः? इति। प्रतिवचनं चास्य प्रश्नस्य, भाषाघटकपदविशेषाणां ध्वनिविशेषाणां, तथा पदवाक्यादिनिष्पत्तिप्रकारविशेषाणां, अर्थविपरिणतीनां, अन्येषां च बाह्यानामान्तराणां च

भाषाङ्गानां सम्यग्विचारणायां वर्तते । भाषाशास्त्रं च इण्डो-जर्मानिक्वंशस्य तत्तद्भाषात्वेन प्रपञ्चात् प्रागारभ्य प्रतिभाविलासान् विचारयति । तत्तद्भाषावैयाकरणैः प्रवर्तितैरनुमानैः इण्डो-जर्मानिक्वंशीयानां भाषाणामनुगतं साजात्यमैक्यं च समर्थयति । सत्यपि भेदे भाषाणामैक्याधिगमनेन भिन्नभाषाणां भिन्नदेशीयानां परस्परभावनया श्रेयांस्यपि भूयांसि संपद्यन्ते । वंशघटकसंघविशेषाणां द्वेषाद्यपि अपनोद्यते ॥

## ॥ भाषाशास्त्रस्य संज्ञाविभागौ ॥

भाषाशास्त्रं च आङ्गल्यादिभाषायां बहुधा व्यपदिश्यते । तत्र (1) Linguistique (2) Linguistic Science (3) The Science of Language (4) Comparative Grammar (5) Glottology (6) Comparative Philology—इति षोढा व्यपदेशः. 'Linguistique' इति जातुचित् France देशे संचरितुं प्रवृत्तं झटित्येव नष्टम्. 'Linguistic Science' इति 'The Science of Language' इति च अतिविस्तृतत्वात् त्यक्तम्. 'Comparative Grammar' इति पुनः भाषांशानां व्याकरणस्यैव केवलस्य बोधकमिति संकुचितमिति च नादृतम् । 'Glottology' इति तु यद्यपि विवक्षितमर्थं सम्यग्बोधयति, सुतरां च भाषाप्रपञ्चं सप्रपञ्चं व्याप्नोति, तथापि न तत् श्रोत्रपेयमतो न महाजनपरिगृहीतमिति विषादास्पदमेव. 'Comparative Philology' इति तु, यद्यपि न Glottologyतुल्यं अलं भवति अर्थावबोधने, तथापि महाजनपरिगृहीतमिति आद्रियतेतराम् ॥

भाषाशास्त्रं च चतुर्धा विभागमर्हति—(1) Phonology (2) Morphology (3) Semantics (4) Comparative Syntax इति. Phonology विभागे तावत् भाषाघटकध्वनिविशेषाणां समुत्पत्तिः वृद्धिः स्वभावश्चेति, स्थानप्रयत्नादिविचारणपुरःसरं विषयीक्रियते. Morphology विभागे पदनिष्पत्तिप्रकारः सुप्तिङादिविचारश्च विचारविषयीक्रियते. Semantics विभागे च पदार्थानां तत्तत्कालावच्छेदेन परिणामाः चरित्रं च विषयीक्रियन्ते। Comparative Syntax विभागे परं शाब्दबोधार्थं पदानां परस्परमन्वयप्रकारो विषयीक्रियते । कैश्चित्परं Comparative Syntax इत्येतत् Morphology विभागे एव अन्तर्भाव्यते ॥

## ॥ अथ भाषाविभागप्रकारः ॥

भाषाप्रपञ्चस्य आपातपरीक्षा तावत् द्विप्रकारतया विभजनीयतां प्रदर्शयेत् । भाषाणां पदनिष्पत्तौ व्याकरणे च परस्परसाधर्म्यवैधर्म्यविमर्शनप्रयुक्त एको विभागः ; उपादानविमर्शनप्रयुक्तो विभागो द्वितीयः । तथाहि—

एकार्थप्रतिपादकानां भाषासु भिन्नतया वर्तमानानां पदानां साजात्यं भवति यदि, अस्माकं विमर्शनपदवीमारोढुमर्हति । भाषास्तु परस्परं समग्रतया प्रधानांशैर्यत्किंचिदंशैः न वा पदवाक्यनिष्पत्तौ व्यवहारे च सादृश्यमापद्येरन् । एवं शाब्दबोधावहेषु पदवाक्यनिष्पत्तिसमभिव्याहारनिदानभूतेषु तासामुपादानेषु सत्सु, शब्दादिनिष्पत्तिप्रकारनिबन्धनो विभागः Morphological classification इति, उपादान (Root-

material) निबन्धनो विभागः Genealogical classification इति च व्यवह्रियते ॥

GENEALOGICAL CLASSIFICATION.

प्रकाराभेदेन साकं प्रकृत्युपादानस्य समो योनिः भाषाणामेकवंशोत्पन्नत्वं सूचयति । इदमुदाहरणम्—

| Skt. | Latin | English |
|---|---|---|
| एक | *ūnus* | *one* |
| द्वि | *duo* | *two* |
| त्रि | *trēs* | *three* |

अत्र विमर्शनं संस्कृत-लाटिन्- इंग्लिष् भाषाणां चरित्रसाजात्यं समानोदरतां च गमयति । एवं आंगली–जर्मन्–डच्–डेनिष् भाषाणां विमर्शनं तासां समानयोगक्षेमतामेकवंशोत्पन्नत्वं च गमयेत् । तथा च या भाषाः स्वपदजालानामाकारप्रकारेण साकमेकस्मात्प्रभवात् प्राप्नुवन्ति, ताः सर्वा अपि Genealogical विभागे अन्तर्भवन्ति ॥

बह्व्यो भाषा यद्येकस्मात्प्रभवात् स्वशब्दाद्युपादानं स्वीकुर्वन्ति, यदि च तासु भूयिष्ठतया प्रातिपदिकशब्दाः विशिष्य सामान्यवस्तुप्राणिक्रियाबान्धव्यादिद्योतकाःसंख्यासर्वनामद्योतकाश्च तुल्यवत् दरीदृश्यन्ते, तर्हि ताः सर्वा एकवंशोत्पन्नाः समानयोगक्षेमा इति तासु परस्परं बान्धव्यं निश्चेतुं पार्यत एव । फ्रेञ्च्, स्पेनिष्, पोर्चुगीस्, रुमेनियन्, इटेलियन्, तद्विकृतयश्च यदि परस्परं भाव्यन्ते, तर्हि विमर्शकदृष्टेरेतत्प्रातिभायात्—यत् ताः

सर्वा अपि अन्यदेशकालावच्छेदेन लेटिन्भाषाया विकृतय एवेति । तथा च ताः सर्वा अपि परस्परं सोदर्यः, प्राचीनलेटिन् भाषायाः पुत्र्य इत्यपि कथने न किंचिद्दुष्यति ॥

इदं त्वत्रावधेयम्—यद्यप्येकस्या भाषाया एकवंशोत्पन्नत्वं निसर्गतः, तथापि परिभ्रमति काले नवनवोदितानभिप्रायानाविष्कर्तुं विजातीयभाषाभ्यश्च पदस्वीकारः स्यात्, येन तत्समानयोगक्षेमत्वमध्यवसीयेत स्थूलमतिभिः । विमर्शकस्तु सूक्ष्मेक्षणिकया तत्तद्व्यापीयशिक्षाधर्मादिभिः भाषाया याथातथ्यमाधिगच्छति । अत्र दिङ्मात्रमुदाह्रियते ।

Indo-European > Modern Persian
Semitic > Arabic.

अत्र Modern Persian भाषा अरेबिक्भाषातः व्यवहारोपयोगितया पदानि स्वीकरोतीति तन्मूलकत्वमध्यवसीयेत स्थूलमतिभिः । तथापि विमर्शकदृष्ट्या Indo-European भाषैव मूलभूता भवति । अराबिकभाषातः पदस्वीकारस्य तु सांकर्यमेव (Contamination of Languages) मूलम् ॥

अत्रैवं कश्चित्प्रत्यवतिष्ठेत—भाषाया जीवनाडी नाम पदोपादानमेव । तथा च या भाषा स्वकोशसमृद्ध्यर्थं भाषान्तरात् पदानि स्वीकरोति तर्हि निःशेषं स्वमूलवंशेन बान्धव्यं पराकृत्य नूतनभाषया स्वीकृता भवेत् । उत्पत्तिबान्धव्यं कोशबान्धव्यं च मिश्रीकर्तुं न युक्तम् । कोशगतपदजालं यदि भाषायाः परम्पराविभागे नियामकं न भवति, तर्हि किमन्यत् ?

उच्यते—कोशगतशब्दजालं व्याकरणं च। यद्यपि शब्दजालानि नूतनतया भाषान्तरेभ्यः समाहृतानि तथापि शब्द-निष्पत्तिप्रकारस्तु सुतरां न विक्रियते। तत्र यदि विकारः स्यात् तर्हि स विकारो व्याकरणप्रक्रियालघूकरणरूप एव स्यात्। न तु भाषान्तरीयनूतनव्याकरणप्रक्रियास्वीकरणरूपः। भाषान्तरेभ्यः शब्दंस्वीकारो नाम एकस्या भाषायाः पौनःपुन्येन भृशं वा संपद्यते। यदा च शब्दजालानि सादृश्यविषयसंदेहमावहन्ति तर्हि व्याकरणनियामकमेव महदुपकरोति॥

एकवंशोद्भवानां भाषाणां विषये इदमन्यदवधेयमस्ति—बन्धुभाषाः सर्वा अपि सोदर्यः स्वकूटस्थभाषात एव प्रकृति-शब्दान् स्वीकुर्वन्तीति नायमेकान्तः। यदि A. B. C. भाषाः परस्परं संसक्ताः कूटस्थ X भाषातः उत्पन्नाः तासामन्योन्यस्या अपि शब्दस्वीकारो भवेत्। तत्तद्भाषीयशब्दांस्तु तत्तच्छिक्षाधर्माः प्रदर्शयेयुः।

| Skt. | Gk. | Lat. | Germ. | Eng. | Idg. |
|---|---|---|---|---|---|
| *gāus* | *bous* | *bōs* | *kuh* | *cow* | < *gōu̯s*. |

अत्र पदानि नैव समग्रतया सरूपाणि, परं तु यत्किंचित्साम्यं अस्मानावर्ज्य तत्तद्भाषीयशिक्षाधर्मद्वारा **gōu̯s* प्रकृतिः इत्युपस्थापयति। अतश्च परम्पराविभागे न शब्दानामाकारात्यन्ताभेदः (Identity of shape); परं तु आकारसादृश्यमेव (Correspondence of shape) शीक्षाधर्माद्यनुगृहीतमादरणीयं भवति। यदि ग्रीक्भाषायां *genos*, लेटिन् भाषायां *genus*,

गैर्वाण्यां पुनः *janas*, आंगल्यां तु *kin* इति वर्तते, शाब्दिकस्तु तासां परस्परबान्धव्यं पर्यालोच्य Indo-European *ĝenos* मूलकत्वं तेषां व्यवस्थापयेत् ॥

भाषाविभागे कर्तव्यं वह्वस्ति । भाषा इमा एतद्वंशोत्पन्ना इति इयत्तया निश्चित्य वक्तुं न पार्यते। भेदे अभेदान्वेषणमेव प्राणि-सामान्यस्य नैसर्गिकी आशा। प्रत्यक्षप्रमाणं तु नैव तत्र अस्मदाशां सुलभतया पूरयेत्। सूक्ष्मेक्षणिका हि तत्रापेक्ष्यते। तथापि कासां-चन भाषाणां परस्परसंबन्धः विमर्शकानां नैव सुलभः। यतः African Negroes, American Indians इत्यादिमृगतुल्यानां भाषा अस्मद्विमर्शसरणिमारोढुं कथं वा पारयन्ति? Friedrich Muller महाशयस्तु महता प्रयासेन भाषाशतं गणयामास। अद्यापि तदेवास्माभिश्चास्थेयम् । भाषाप्रपञ्चमध्ये प्रधानवंशास्तु इमे—

(1) Indo-European (2) Semitic
(3) Ural-Altaic (4) Malayo-Polynesian
(5) The Bantu of South Africa
(6) The Dravidian of South India.

## MORPHOLOGICAL CLASSIFICATION.

पदानां निष्पत्तिप्रकारप्रयुक्तो विभागः Morphological विभागः। शब्दनिष्पत्तिप्रकारे परस्परं सदृशा विसदृशाश्च भाषा-भेदाः। ते च क्रोडीकृत्य उक्तानुसारेण विभज्यन्ते। शब्दनिष्पत्तौ प्रकारत्रयं वर्तते। तत्र प्रत्यर्थं संश्लेषमन्तरा एको विभागः। सेयं

भाषा Isolating, Monosyllabic, Radical इति परिभाष्यते। यथा चीनभाषा । द्वितीयो विभागः Agglutinating इति कथ्यते। यथा टर्किप् जपानिस् च । तृतीयस्तु Inflexional, Organic, Amalgamating इति वा कथ्यते। अत्र संस्कृत-ग्रीकादयो लक्ष्यम् ॥

प्रथमं Isolating भाषाः। अत्र प्रकृतिशब्दाः तथैव अविकृता वर्तन्ते। ते च स्वेषु पदान्तरसंसर्गं तत्समवायं वा सोढुं नैव शक्नुवन्ति। तथा चात्र आन्तरो बाह्यो वा परिणामो न वर्तते। वाक्ये च प्रकृतिः प्रकृतिमनुयाति। यदि *R* प्रकृतेः संकेतः, *m* आन्तरपरिणामस्य, *a* उपसर्गागमादेशादीनां, तर्हि Isolating भाषायां अनुगतवाक्यसंकेतस्तु—(*a m* विना) *R R R R* इत्येव भवेत्। उदाहरणम्—यदि EI इत्यस्य गामिरर्थः, ENT इत्यस्य ते इति, तदा Isolating भाषायां EI ENT, ENT EI इति वा स्यात् ॥

Agglutinating विभागः। अत्र टर्किप् जपानिस्, मेग्यर् भाषाः लक्ष्याणि भवन्ति। वाक्येऽत्र प्रकृतिशब्दाः शाब्दबोधाविष्करणार्थं व्याकरणधर्मानुरोधेन पदान्तरान्वयार्थं च उपसर्गादिभिः संयुक्ता भवन्ति। संयुक्ता उपसर्गादयो यद्यपि वाक्ये स्वप्रधानतया विश्लिष्य स्थातुं न पारयन्ति, तथापि स्वनियतार्थं प्रकाशयन्तः स्वाकारांश्च इदंतया आविष्कुर्वन्तः स्वाश्रयं मूलप्रकृतिं न विकुर्वन्ति. Agglutinating इति पदमेव 'शब्दाः परस्परं संयुक्ताः, न समवेता अविभजनीयतया' इतीममर्थं

दिशति । अत्र संकेतस्तु—$Ra^n$ इति, $a^nR$ इति वा । दृष्टान्तः—EIENT : ENTEI इति । अस्मिन् संकेते $n$ इत्येतत् उपसर्गादीनां संख्याया अनियमं बोधयतीत्यवगन्तव्यम् ॥

Amalgamating विभागः । अत्र प्रत्यर्थबोधकानि पदानि स्वेषु अर्थान्तरबोधकान् उपसर्गादेशागमादीन् स्वीकुर्वन्ति । एते च प्रकृत्या साकं मनसाप्यविभजनीयं यथा स्यात्तथा समवयन्ति, येन प्रकृतिरनेकधा परिणमते । परिणामानन्तरं सा प्रकृतिः परिणामात्प्राक्कथमासीदिति ज्ञातुं न शक्यते । अत्र $R^m$ $a^{mn}$ इति संकेतः । दृष्टान्तः—EIENT EINT EIN INT IN etc.

इदं च विभागत्रयं अव्यभिचारित्वाभावात् तात्कालिकं मन्तव्यम् । तस्मात् 'इयं भाषा अत्रैव विभागे अन्तर्भवति' इति वक्तुं न पार्यते । यथा कण्ठेकालशब्दः द्वितीयेऽन्तर्भवति । तथापि संस्कृतशब्दाः प्रायशः तृतीयविभागेऽन्तर्भवन्ति ॥

पञ्चाशद्वर्षेभ्यः प्राक्तनः Dr. Caldwell नामा द्राविडीविमर्शकः 'कर्णाटक-तमिलादयः अग्लूटिनेटिंग्विभागेऽन्तर्भवन्ति, ताश्च आर्यभाषाव्यतिरिक्तभाषाप्रकृतिका एव । किं तु Suffix-Agglutinating इति वक्तव्यम्' इति मन्यते । तथापि Amalgamating-Agglutinating, Inflexional-Agglutinating, Organic-Agglutinating इति वा व्यपदेष्टुं शक्यते ॥

टक्कर् महाशयस्तु एवं विभागं भाषाणां मन्यते—

1. Essentially *Polysynthetic, Holophrastic,* or *Incorporating* tongues ; such as the American Indian.

2. An inflected tongue habitually incorporating pronouns: *e.g.* the *Basque.*

3. *Prefix-Agglutinating* languages: the Bantu family.

4. *Suffix-Agglutinating* languages: *e.g.* the Ural-Altaic.

5. *Suffix-Amalgamating*: the Indo-European tongues in their older stage.

6. *Semi-inflexional* or *Analytical*, (largely *positional*): most Indo-European languages in their modern shape.

7. *Isolating*, or *Radical positional*: Chinese, etc.

8. *Suffix-and-Prefix-Amalgamating*, with dynamic variability of the root: the Semitic tongues.

एवं विभागोऽप्यसमग्र एव, Agglutinating-Inflexional इत्यादिप्रकारान्तरदर्शनात्। यथा—

*Sgd; masjid*

*Slm, Salima, Islam, Selim, Salam, Muslim, Suleiman.*

अत्र धात्वंशे विकारस्य लोपस्य वा अभावेऽपि मध्ये मध्ये विसदृशानामचां संबन्धात् धातुस्वरूपं न प्रमुखे विशिष्य ज्ञातुं शक्यते। पर्यालोचनया तु शक्यते विज्ञातुम्। तथा च भाषाणां प्रतिनियतविभागः अव्यभिचारितया नैव कर्तुं शक्यते॥

यथा वा Inflexional भाषात्वेन गृहीतायां गैर्वाण्यां, द्राविड्यां कल् कल्लै कल्लिनाल् इतिवत्, शिला शिलां शिलया

इत्यादिषु सादृश्यदर्शनात्, Agglutination अंशा अपि विद्यन्ते। अतश्च भाषायामनुगता इयत्ता दुःशका निर्णेतुम् । अत एव च शाब्दिकसमये बहुधा Morphological विभाग उपपादितो भवति पण्डितप्रकाण्डैः । यावदत्र कतिचिदुदाहरामः ॥

F. and A. W. Schlegel इत्येतौ एवं विभजेते—

1. Languages without Inflexion (प्रकृतिप्रत्ययसमवायाशक्ता भाषाः)
2. Languages with affixes (उपसर्गादिसंयुक्ता भाषाः)
3. Inflexional Languages (प्रकृतिप्रत्ययसमवायसमर्था भाषाः)

Grimm इत्ययं तु—

1. Languages without Inflexion
2. Inflexional Languages
3. Analytical Languages (प्रकृतिप्रत्ययविश्लेषशालिन्यो भाषाः) इति ॥

Bopp इत्ययं तु—

1. संयोगसमवायाशक्ता विश्लिष्टधातुमत्यो भाषाः
2. विश्लिष्टधातुमत्यः व्याकरणेन पुनः पदान्तरसंयोगसमर्थाः
3. संश्लिष्टधातुमत्यः बाह्यान्तरसंयोगसमवायादिविपरिणामस्वभावाः । इति ॥

Pott इत्ययं तु—

1. सुतरां पदपदांशविपरिणामशीला भाषाः

2. संयोगसमर्थाः पदान्तरबाह्यसंयोगशीलाः

3. संयोगाद्यसमर्थाः प्रश्लिष्टा भाषाः

4. सावकाशा भाषाः, यासु पदवाक्ययोर्नैव तारत

Schleicher इत्ययं तु—

1. Isolating Languages with roots merely posed. (प्रश्लिष्टा भाषाः, यासु केवलं धातवः समभिव्य

2. Agglutinating Languages with ex union of uncorrupted and unobserved main with subordinate modifying roots which ad obscuration. (पदान्तरसंयोगसमर्था भाषा यासु पदानां संयोगः प्रकृतितिरस्कारं विना, तथा अप्रधानपदानां तिरस्क

3. Inflexional or amalgamating language all the word-elements capable of corruption (प समवायसमर्थाः).

पूर्वोक्ता विभागास्तु परस्परं नैव सदृशाः । श्लीपर्मतयोरनादरणीयं यत्किंचिद्वैरूप्यं वर्तते । श्लीपर् Agglutinating इत्यस्य परिणामवैशेष्यं नाङ्गीकरोति श्लिष्टं भवति । तथा चात्र एकैकोऽपि शाब्दिकः विभाग तदाधिक्यं च न गृह्णातीति स्पष्टं भवति ॥

पक्षपातं परित्यज्य यदि ताटस्थ्यमवलम्ब्यते तदा गद्वयस्यैव अवकाशो वर्तत इति टक्कर् मन्यते—

धातूनां बाह्यान्तरपरिणामाभाववत्त्वे सति केवलसम हारवत्यो भाषा इत्येको विभागः ।

नानाविधबाह्यान्तरपरिणामवत्त्वे सति संसृष्टा भाषा इत्यपरो विभागः । इति ॥

प्रथमे विभागे चैनीस्, बर्मीस्, अनामिस् एते अन्तर्भवन्ति ॥

लाघवगुणमवलम्ब्य विभागद्वयं कृत्वा Inflexional पदेन Agglutinating, Amalgamating, भाषाः समानकोटिप्रविष्टाः कृत्वा च Inflexional भाषागतपरस्परविशेषांशानुरोधेन अवान्तरभेदं चात्र कुर्मः ॥

A. INFLECTED—

1. Amalgamating, *without internal dynamic change*—
   (a) Synthetic (Skt., Greek, Latin, Gothic, etc.).
   (b) Analytic (Eng., Persian and most modern Indo-European languages in various measures).
2. Amalgamating, *with internal dynamic change*
   (a) Synthetic (old Semitic).
   (b) Analytic (later Hebrew, etc. to a certain extent).
3. Agglutinating—
   (a) Suffix-Agglutinating (*e.g*, Ural-Altaic).
   (b) Prefix-Agglutinating (*e.g.* Bantu).
   (c) Suffix-and-Prefix-Agglutinating (*e.g.*Malay).
   (d) Pronoun-Incorporating (*e.g.* Basque).

B. POLYSYNTHETIC OR HOLOPHRASTIC (the American Indian languages).

## अथ ROOT.

गैर्वाण्यां पुनः धातुशब्दः तिङन्तान् भ्वादीन् बोधयति। धातुशब्दस्य आङ्गल्यां Root इति पर्यायशब्दः। Root इत्ययं मूले शक्तः। कथमत्रैतयोः पर्यायता? उच्यते—

वृक्षमूलसादृश्यात् भ्वादीनां पर्यायता। यथा हि—आदौ वृक्षे मूलं, ततः स्कन्धः शाखाः पर्णानि इति क्रमः, तथा अत्रापि प्रथमं धातवः, ततः प्रत्ययादिसंबन्धेन सुबन्तादिपरिणामादयः। यथा भूधातोः भवनभूतिभवतिप्रभृतयः। धातवश्च भाषाघटकसुप्तिङन्तरूपपर्यालोचनया शक्यविज्ञानाः। इयान् विशेषः। यथा स्कन्धशाखापर्णादीन् पृथक्कृत्यापि मूलं साक्षात्कर्तुं पार्यते, न तथा भाषासु धातवः पृथक् प्रत्यक्षीकर्तुम्। कैवल्येन तेषां तत्र प्रयोगस्य निषिद्धत्वात्। यदाह भाष्यकारः—न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्यय इति। किंच मूलं यथा विभागार्हं, न तथा धातवः सामान्येन। परं तु केचन नामधातवः कन्दर्पति-विरिञ्चति-प्रभृतयो विभागमर्हन्ति। वस्तुत एते नामधातवः तिङ्ग्रहणार्थं धातुसंज्ञां लभन्ते। सुबन्तसदृशा एवेति बोध्यम्॥

## ॥ केषांचिच्छब्दानां प्रकृतिप्रत्ययविचारः॥

(1) Pitrā. अत्र Pi इत्येतत् Root, tṛ इत्येतत् तस्य प्रातिपदिकत्वनिष्पत्तये भवति प्रत्ययः। तस्य नाम च Stem-forming suffix इति. *a* इत्येतत् सुप्प्रत्ययः (case-ending suffix). पाणिनीयास्तु पितृ इति प्रकृतिः, आ इत्येतत् सुप्प्रत्यय इत्याहुः॥

(2) Vidhavā. अत्र Vidh इत्येतत् Root, av इत्येतत् Primary suffix (कृत्प्रत्ययः), ā इत्येतत् Secondary suffix (तद्धितः). पाणिनीयास्तु वि–धवा इति विभजन्ते ॥

(3) Kṛtavān. √ Kṛ+'ta' (Primary suffix) + vān (Secondary suffix). पाणिनीयास्तु Kṛ–tavān इति विभजन्ते। Mātṛmān, Kroṣṭunā इत्यादय एवमूह्याः ॥

(4) Bhavati. √Bhav + a (Stem-forming suffix) + ti (Verbal-ending suffix).

## THE ORIGIN AND DEVELOPMENT OF SPEECH.

## ॥ भाषाया उत्पत्त्यभिवृद्धी ॥

व्यवहारसाधनीभूतभाषासामान्यस्य कुतः कथं वा उत्पत्तिः इत्यत्र शाब्दिकसमये बहुधा विप्रतिपत्तिः । अत एव मतभेदाश्च बहवो वर्तन्ते। तदत्र नवीनविमर्शकसरणिमनुसृत्य विचारयामः ॥

यथा परिमितैरेव स्वरैः उच्चावचमोतप्रोततया महत् सङ्गीतं प्रपञ्च्यते तथा परिमितैरेवाक्षरैः महान् शब्दप्रपञ्चः । एवं भाषाव्यवहारं गीतिविशेषं (musical phenomenon) मन्यन्ते Bloomfield प्रभृतयः शाब्दिकाः ॥

भाषायाः प्रयोजनं हि जनानां परस्परमाशयविनिमय एव । स च भाषाधिगमनात्प्राक् प्रकारान्तरैः समपद्यत । के ते प्रकाराः ?

प्रथमं मृगचेष्टिततुल्यं मानुषचेष्टैव अर्थद्योतिकाऽऽसीत् । तथाहि—मृगप्रपञ्चे परान् प्रति अभिप्रायद्योतकं प्रवृत्तिप्रयोजकं

च चेष्टितमेव भवतीति प्रमाणसिद्धम्। Prof. Julian Huxley तावत् तिर्यक्प्रपञ्चे कथं व्यवहारः प्रचलतीति सदृष्टान्तं सप्रपञ्चं निरूपयति। अतश्च अभिप्रायस्य चेष्टितं प्रतीकं भवतीत्यत्र न कश्चिद्विप्रतिपद्येत। श्वानश्च स्वाभिप्रायं पुच्छचालनादिभिः प्रकटयन्तीति सर्वानुभूतिः। यद्यपि केचन मृगा ध्वनिविशेषं संतोपेण दुःखेन च कुर्वन्ति, न ते वर्णात्मकाः। यदि वर्णसदृशा भवन्ति तर्हि अनवरताभ्यासात् घुणाक्षरन्यायाद्वा भवेयुः, न तु समनस्कतया। स्तनन्धयाश्च चेष्टितेनैव व्यवहरन्ति॥

Sir E. B. Taylor महाशयः स्वकीये Early History of Mankind इति ग्रन्थे आधुनिकसमाजेष्वपि कुत्रचित् चेष्टामयी भापा अवलम्ब्यत इति सदृष्टान्तं सविस्मयं चास्मानावेदयति॥

नातिचिरात्प्रागेव उत्तरामेरिकादेशीयेषु रक्तहैन्दवेपु (Red Indians of North America) चेष्टैव व्यवहारार्थमुपायुज्यत। यदि भिन्नाः कूटाः परस्परदिदृक्षया संघीभवेयुः तर्हि स्वावयवचेष्टितैरेव व्यवहरन्ति स्म। यदि वर्तुलं किंचिदपेक्ष्येत तर्हि आकाशे सूर्यबिम्बसदृशं हस्ताङ्गुल्या प्रदर्शयेयुः. General Scottनामा चेष्टितभापाप्रवीणः एवमभिप्रैत्यत्र। अमेरिकाहैन्दवास्तु केवलं मृगप्रायाः। यद्यपि तेपां प्रतिनियता भापा वर्तते तथाप्यन्योन्यस्य भापा अन्योन्येन न ज्ञायते। अतः परस्परहृदयाविष्करणार्थं त एवं कुर्वन्ति—इति॥

चेष्टितभाषायामस्माकमिव प्रकृतिप्रत्ययविवेचनरूपव्याकरणादिकं न वर्तते। अनुकरणसादृश्य (Imitation and Analogy) प्रधाना हि सा ॥

प्रथमतो मनुष्यं वचनोपलब्धये किं तावन्निर्वबन्ध ? परिणमति काले नानाकर्मसु व्यापृतेषु जनेषु चेष्टिताद्यर्थमङ्गान्युपयोक्तुं कार्यबाहुल्यान्न पारितम्। कार्यव्यापृततया च चक्षुरादिभिरपि स्वाशयमाविष्कर्तुं नैव शेकुः। अतः साधनान्तरोपलब्धौ तेषां निर्बन्धः समजनि ॥

वानरास्तु मनुष्यवत्कार्यबाहुल्याभावादेतं निर्बन्धमत्यक्रामन्। शिल्पादिसूक्ष्मकर्मसु हस्तादीनां व्यापृततया स्वाभिप्रायविशेषाणां संमुग्धाकारतां विहाय विशेषाकारतामाधातुं विशिष्टानि साधनान्तराण्यावश्यकान्यभूवन्। यानि चेष्टितानि पूर्वं करचरणादाववर्तन्त तान्येवाद्य आस्यजिह्वादिषु विपर्यवर्तन्त ॥

आस्योष्ठादिषु चेष्टामयी भाषा उदभूदित्यत्र Charles Darwin प्रमाणं भवति। भावप्रकाशाख्ये (Expression of Emotions) स्वग्रन्थे लिखति—हस्तपादाद्यनुष्ठानानुकरणस्य मुखे अवलोकनेन आस्यादिषु चेष्टामयी भाषा उदभूदिति ॥

तथा च प्रमाणैरेवं राद्धान्तितं स्यात्। प्रथमतो मनुष्यः स्वाभिप्रायं चेष्टितैरेवाविश्चकार। हस्तचेष्टानुसारि जिह्वोष्ठादिष्वप्यबोधपूर्वं चेष्टितमभूत्। अन्ततः कार्यबाहुल्यव्यापृततया हस्तपादस्य व्यवहाररङ्गप्रधाननटस्यान्यत्र प्रवृत्तिरासीत्। तदनुकारिणः

आस्यजिह्वोष्ठादयः चेष्टितशिल्पे (Pantomimic Art) प्रावीण्यमधिगतवन्तो व्यवहाररङ्गमध्यासामासुः —इति ॥

अनन्तरमास्यजिह्वोष्ठस्य चेष्टितावसरे कण्ठनासादिपुटद्वारा अनिला उद्भूवन् । यतश्चेष्टा रहस्योदितवचनविधया श्रोत्रप्रत्यक्षीभूताः (whispered speech-sound). यदा चेमे पुरातना जना आस्यादिचेष्टावसरे परानभिमुखीकर्तुमावर्जयितुं च प्रयतितवन्तः तदा वायुविकारो वर्णः (whispered sound) प्रयत्नाधिक्यात् स्वनविधया (voiced sound) श्रोत्रप्रत्यक्षमभूत् ॥

उभयथापि स्वनप्रकारा अनिलमयी च भाषा पूर्वावस्थातः कंचन विशेषमलभत । पूर्वं चेष्टामयी सती श्रोत्रप्रत्यक्षायोग्या सा इदानीं पुनस्तत्प्रत्यक्षयोग्या आसीत्, यतो मनुष्यसामान्यमिदंप्रथमतया अन्धकारे देशविप्रकर्षे च परस्परं व्यवहर्तुं समर्थमभूत् । तथा च एतस्मादेव भाषाप्रपञ्चो वितस्तारेति निःशङ्कं शक्यते वदितुम् ॥

उक्तं क्रोडीकुर्मो विशेषान्तरैः साकम्—

१. प्रथमतश्चेष्टितभाषा । बालाश्चेष्टितैरेव व्यवहरन्ति । अधुनापि नाटकादिकं चेष्टारूपेणैव प्रदर्श्यते (movies). हस्तपादकण्ठोष्ठजिह्वादिना चेष्टितं चेष्टाभाषास्वन्तर्भवति । चित्रसंकेतादिकमप्यत्रैव ॥

२. गीतिमयी भाषा ( Language of Music ). अस्यां स्वरा एव वर्तन्ते । दृष्टान्तो मार्जाररवादिः ॥

३. गीतिवर्जं वर्णैरेव व्यज्यमाना भाषा ॥

४. ध्वनिवर्जं लेखनरूपम् ॥
५. पूर्वोक्तानां संघातमयी भाषा ॥

## ॥ अथ शब्दार्थसंबन्धः ॥

How meanings came to be attached to sounds?

शब्दार्थयोः संबन्धप्रकारः कथमिति प्रश्नः समनन्तरमेव समुदेति। प्रश्नमिमं बहुधा समादधते शाब्दिकाः ॥

१. भाषासामान्यमनुकरणमूलमिति केचन मन्यन्ते। मोक्षमूलः (Max Muller) अस्य मतस्य प्रवर्तकः। सोऽयं पक्षः—Puff-puff theory, cuckoo theory, bow-vow theory इति वा कथ्यते। प्रथममेतद्विधयाऽनुकरणसमुद्भूता ध्वनिविशेषाः। प्रमाणपुरस्सरं विचार्यमाणे नायं पक्षः श्लिष्टो भवति। अतश्च न सुधीभिरादरणीयः ॥

२. भाषा तावत् भावद्योतकध्वनिविधयैव प्रमुखे आसीत्—Expression of emotions. शृङ्गाररौद्रभयादिरसनिर्भराः पुरुषाः कथंचित् ध्वनिरूपेणैव स्वभावादिकमाविश्चक्रुः। भयकोपद्योतका ध्वनिविशेषा अस्मिन् पक्षे अन्तर्भवन्ति ॥

३. कंचिदर्थं निर्देष्टुमकस्मात्कंचिच्छब्दं व्यवहरति शिशुः। तस्मिन्नर्थे तस्य शब्दस्यानवरतमाम्रेडितेनैव तत्तच्छब्दार्थयोः संबन्धः ॥

४. तत्तदर्थशक्तानां पदानां लक्षणया अर्थान्तरेष्वप्यनुवृत्तिः—यथा लक्षणाभेदाः ॥

## INDO-GERMANIC FAMILY.

यस्माद्वंशात् संस्कृत-ग्रीक्-लेटिन्भाषादयः समुत्पन्नाः सोऽयम् इण्डोजर्मानिक् वंशः । प्राचीनग्रन्थेष्वयम् Indo-European, Aryan, Indo-Celtic इत्यपि व्यवह्रियते. Aryanशब्दः संस्कृतभाषातो निष्पन्नः । एतच्छब्दप्रयोगे समग्रतया सजातीया भाषा उदिता न स्युः । अयं परस्परमत्यन्तं संबद्धाः वंशान्तर्गताः Iranianभाषाः हैन्दवभाषा एव च केवलं निर्दिशति. Indo-European शब्दप्रयोगे तु विचार्यमाणे दोषः कश्चित्प्रतिभाति । अयं शब्दः भारतदेशे यौरोपदेशेषु च वर्तमाना भाषाः सर्वा एकवंशोत्पन्नाः इतीममर्थं प्रत्याययेत् । तत्त्वं तु अन्यथा । पश्यत ! भारतवर्षे एव एतद्वंशोत्पन्ना भाषा आर्यावर्ते एव प्रचलन्ति । दक्षिणदेशे पुनर्व्यवह्रियमाणा भाषाः सुतरां Indo-Germanic भिन्नवंशोत्पन्नाः । यूरोपदेशेषु च भिन्नजातीया भाषा व्यवह्रियन्ते । यथा—The Turkish, the Basque, the Lapps, the Hungarian and the Finnish इति ॥

Indo-Germanic इति निर्देशस्तु आर्यावर्तयौरोपपश्चिमभागान्तर्गता भाषा निर्देष्टुमुपयुज्यते. Celtic भाषाया अपि एतद्वंशोत्पन्नताज्ञानात्प्राक् एतन्निर्देशस्योपयुक्तत्वात् तज्ज्ञानानन्तरं Indo-Celtic इति निर्देशः कैश्चिदुल्लिख्यते । जैल्स्-Giles-मते पुनस्तन्न सम्यक् । कुतः ? केल्टिक्जना जर्मनीयैर्हठात्स्वदेशान्निष्कासिताः । तदाप्रभृति जर्मनीयैराक्रान्तत्वात्तद्देशस्थकेल्टिक्गत-

जर्मनीयभाषाभासस्यैव केल्टिक्व्यवहारतया इण्डोकेल्टिक्व्यवहारं विहाय इण्डोजर्मानिक् इत्येवालम्— इति ॥

श्रीसंस्कृतभाषाधिगमनेन भाषाशास्त्रमेव च समजनि सुसंस्कृतं च. Sir William Jones, Colebrooke प्रभृतिभिः यदा संस्कृतभाषा यूरोप्देशमानीता तदाप्रभृति भिन्नाभिन्नभाषा अभिन्नमातृभाषाप्रभवा इत्येतत्प्रमाणैरनुगृहीतमभूत् । सेयं मातृभाषा Primitive Indo-Germanic tongue इति कथ्यते । प्रमाणानुगृहीतात् शोभनादस्मात्पक्षादेव आधुनिकं भाषाशास्त्रमुद्भूत् । दूरवृत्तित्वे सति प्राचीनयौरोपभाषाभिः साकं संस्कृतस्य साजात्यं प्राचीनमतस्य संकुचितत्वं स्फुटयामास । प्रागेतस्मात् यूरोप्देशे एवमभ्युपगतम—यत्, लेटिन्भाषादयो ग्रीक्प्रभवा इति, हिन्दुदेशे च भाषान्तराणि गैर्वाणवाणीप्रभवाणि इति च । अनन्तरमेतस्मात्प्राचीनभाषाणां माताढुहितृभावं विहाय समानोदर्जन्यतया स्वसृभावस्तर्कितः, प्रमाणैर्निश्चितश्च । एतादृशदिशा भाषान्तराण्यप्यत्र अन्तर्भावितानि । कार्ये पुनर्महत्यस्मिन् यत्नाधिक्यमपेक्षितम् ॥

Criteria of Indo-Germanic Languages.

इण्डोजर्मानिक्वंशीयानां सोदरभावे निर्णायकं प्रमाणं किम्? भाषाविशेषस्य इण्डोजर्मानिकप्रभवत्वानिर्णये यत्नाधिक्यमपेक्ष्यते । अन्धकारितेऽस्मिन् मार्गे शाब्दिकस्य कः प्रदीपायते? एतन्निर्णयार्थं कतिचन विषयाः प्रथमतः समर्थनीयाः ॥

१. इण्डोजर्मानिकभाषान्तरीयधातुभिः साकमादित्सितभाषीयधातोः साजात्यम् ॥

२. इण्डोजर्मानिक्भाषान्तरीयसुप्तिङन्तनिष्पत्तिप्रकारेणादित्सितभाषीयसुप्तिङन्तनिष्पत्तिप्रकारसाजात्यम् ॥

३. इण्डोजर्मानिक्भाषान्तरेण साकमादित्सितभाषायाः शाब्दबोधजनकवाक्यगतपदसंसर्गमर्यादाप्रकारसाजात्यम् ॥

त्रिषु प्रथमो न सर्वथाप्यनादरणीयः । निर्णयार्थमवश्यमपेक्ष्यते हि सः । द्वितीयतृतीयौ तु परिक्रामति काले अबोधपङ्के मग्नौ स्याताम् । पश्यत । आङ्गल्यां तावत् सुप्तिङन्तयोर्वैजात्यं नष्टप्रायमेव, अथवा प्रभाततारा इव विरलविरलम् ॥

अत्र सर्वनामसंख्यावाचकशब्दानां प्राधान्यम् । सर्वनामसंख्यावाचकशब्दसाजात्येनाप्यत्र किंचिदवधारयितुं पार्यते । भाषाजीविते अतिप्रधानतया सर्वनाम्नां दुर्निवारता । यद्यपि वंशान्तरे सर्वनाम्नामुपयोगो दुर्निरीक्षः, तथापि इण्डोजर्मानिक्वंशे सुस्पष्टः ॥

धातुसाजात्यं ध्वनिसाजात्यप्रयुक्तमिति नायमेकान्तः । परंतु ध्वनिपरिणामे कश्चिदनुगतो नियमः परमपेक्ष्यते । यथा संस्कृतभकारः लेटिन्भाषायां *f* इति परिणमते ॥

---

## ॥ इण्डोजर्मानिक् भाषाविभागः ॥

1. Aryan (Indo-Iranian)
2. Armenian
3. Albanian
4. Germanic
5. Greek
6. Italic
7. Celtic
8. Baltic Slavonic
9. Phrygian Thracian.

इमा नव भाषा निःसंशयमस्मान् विमर्शकसरण्या स्वमातृभाषां नयन्ति । तन्मातृभाषास्वरूपं चास्माभिरनुमीयते केवलम् । तद्भाषाघटकपदानामन्यतममपि साक्षात्परम्परया वा न समधिगतमित्येतद्विपादास्पदमेव । तादृशभाषाव्यवहर्तृभिरध्युषितो देशविशेषः, तैश्च वर्धितो नागरिकताविशेषश्च खद्योतद्युतिवत् विरलविरलमुपलभ्यते. Anthropology प्रभृतिशास्त्रविमर्शकपरिश्रमः तद्देशविशेषनिर्णयं प्रति उपकुरुते । अतिक्रान्तचारित्रभूमीनां तेषां प्रथमाध्युषितो देशः आशियामध्यपीठभूमिरित्यनुमीयते ॥

## ॥ भाषाशास्त्रस्य शास्त्रान्तरैः साकं तौल्यविमर्शः ॥

The Status of Linguistics as a Science.

इण्डोयूरोपियन्वंशीयभाषाणां परस्परभावनया विमर्शनम्, ततश्च तन्मातृभाषायाः पुनः संपादनम् इत्येताभ्यां साकं भाषाशास्त्रमभ्युदपादीति सुवचम् । क्षोदक्षमेषु विमर्शनेषु इण्डोयौरोपशाब्दिकाः क्रमशः कांचन परिभाषां भौतिकादिशास्त्रान्तरतुल्यं संवर्धयन्तोऽद्याप्यासते । चरित्रप्रकारकं परस्परभावनाप्रकारकं च

भाषाशास्त्रम् (Historical and Comparative linguistics) 'ध्वनिपरिणामः तन्नियमाश्च सर्वत्र समाः, प्रकृतिप्रत्ययसमीकरणं (Morphological re-adjustment) ध्वनिपरिणामप्रयुक्तमेव' इति पक्षमभ्युपगम्य संपादितम् । एतत्पक्षसाधुताभ्युपगमे युक्तिः का ? अत्र शाब्दिकानुभूतिरेव एतत्पक्षसमीचीनतामवगमयतीति ब्रूमः ॥

इण्डोयौरोपशाब्दिकैः संपादिता विमर्शनप्रकारविशेषा भाषान्तराण्यपि सुष्टु भावयन्ति । न्यायाश्चैते प्राचीनतमासु अचिरादेव समधिगतासु भाषासु चिरन्तनेषु नागरिकभाषाविशेषेष्वपि सर्वत्रानुगततया वर्तन्ते । किं च नागरिकभाषाविमर्शनेनैव केवलं नैते अनुगततया सुस्पष्टा भवेयुः । अपि तु प्राचीनभाषा यदि परस्परं विमृश्यन्ते, तर्हि उक्तं स्पष्टीभवेत्; असांकर्यात्तासां, सांकर्याच्च नवीनानाम् । ध्वनिनियमः (Phonetic law) सादृश्यसमीकरणं च (Analogical Levelling) भाषाणामेकप्रभवोत्पन्नत्वे कुञ्चिकायेते. Prof. Bloomfield तावत् स्वकीयमध्यआल्गोङ्किन् (Algonkin) भाषाविमर्शने स्वानुभूत्या अनुगृह्णाति मतमेतत्. Edward Sapir इत्ययं स्वकीये अथबास्कन् (Athabascan) भाषाविमर्शने स्वानुभूत्या राद्धान्तमिमं द्रढयति । अत्र विमर्शकैः संपाद्यमानो न्यायो यदि कणशः क्रमशश्च विस्तार्येत तर्हि भाषासामान्यस्य ऐक्यं साक्षात्कर्तुं पार्येत । एते च न्यायाः सर्वत्र समा अनुगताश्चेत्येतदपि विशदं भवेत् ॥

अथ भाषाशास्त्रस्य शास्त्रान्तरैः साकं तौल्यं वर्तते न वा ? अस्ति चेत् कीदृशैरंशैः ? इत्येतदत्र निपुणं विचारयामः ॥

## Linguistics to Anthropology.

Anthropolgy शास्त्रं प्रति, साहित्यशास्त्रं (Cultural science) प्रति च शब्दशास्त्रस्योपकारः सर्वसंमत एव। वृद्धिं गतवति शब्दशास्त्रविमर्शने भाषा नाम मानुषशास्त्रे करणं भूत्वा शास्त्रान्तरेभ्यश्च स्वात्मशोधकं स्वपोषकं च उपकारमतीव प्राप्नोति। आधुनिकशाब्दिकेन स्वकीयभाषाव्याकरणमात्रे आस्थातुं न पार्यते। भाषाणां परस्परसंबन्धं मानुषशास्त्रेण साहित्यचरित्रेण धर्मशास्त्रेण मनस्तत्वेन वेदान्तेन भौतिकशास्त्रेण शरीरमर्मशास्त्रेण च यः संबन्धः भाषाशास्त्रस्य तं च को वाऽमूढ आधुनिको मनसि न कुर्यात्? अन्यथा तस्य कूपमण्डूकन्यायापत्तिरेव स्यात्। एकैकस्यापि साहित्यशास्त्रस्य महदुपकरोति भाषाशास्त्रमित्येष घण्टाघोषः। लोकसहृदयताया भाषैव अनुक्रमणिकायते। अन्तरा भाषाशास्त्रोपकारं भूयोऽवलोकनादिभिः लोकसहृदयतां साङ्घिकनियमादींश्च अधिजिगमिषुः चर्मवदम्बरं वेष्टयिष्यति, खेऽपि शाकुनं पदमधिजिगमिषति, क्षुरेणोपलादीनपि विदारयितुमिच्छति। हन्त! प्राचीनप्रपञ्चचरित्रप्रणयिना तद्भाषाज्ञानमन्तरा कथमिवास्थेयम्?

सांघिकतत्त्वस्य (Social reality) भाषा प्रदीपायते। अर्थप्रपञ्चस्य ध्वान्तावृतत्वं हि स्यात् शब्दज्योतिरन्तरा। भिन्नभिन्ना भाषाः, भाषानुगुणमाहारव्यवहारादयः, तदनुगुणं च सहृदयता। तत्तद्भाषाव्यवहर्तृभिः अवच्छिन्नस्तत्तत्प्रदेशः तत्त्वेन विभिन्न एव। अतश्च तत्तत्संघतत्त्वबोधनार्थं तत्तद्भाषा अपरिहार्यैव॥

## Linguistics to Human culture.

मानुषप्रतिभाविमर्शनप्रविविक्षोः भाषाचरित्रज्ञानमपरिहार्यमिति सिद्धे एतदपि सिद्धं भवति—यत्—लोकप्रतिभाचर्चायां भाषा प्रतीकभूता सती प्रदीपायत इति । प्रतिभाप्रयुक्तविषयाश्च भाषाद्वारैव प्रचार्यन्ते । तथा चाद्य नूतनविषयसंपादनादिकं भाषयैवाधिगम्यते । एतादृशरीत्या विमर्शनं भाषायाः, यूरोप् आशियादेशेषु कालमलीमसान् प्राचीनविषयनिवहान् व्यक्तीकुर्वदद्यापि दरीदृश्यते ॥

## Linguistics to Sociology.

अथ संघतत्त्वशास्त्रेण भाषाशास्त्रसंबन्धः । साङ्घिकतत्त्वशास्त्रिभिस्तु मनुष्याणां परस्परव्यवहारार्थं या परिभाषा तस्यां जागरूकैर्भाव्यम् । एतदर्थं भाषासारल्यं (Language-facilitation) भाषाभेदाश्च प्रेक्षावत्प्रतिपित्सापदवीमर्हन्ति । किं च महासंघेवृत्तानां भाषाऽवान्तरभेदविशेषाणां प्रतिनियततात्पर्यं प्राधान्यं च जागरूकतया निरूपणीयम् । तत्तत्संघीयोच्चारणविशेषा निपातविशेषा भाषाभासविकल्पाः पारिभाषिकप्रयोगविशेषाश्च सांघिकतत्त्वं साधु श्लिष्टं च निवेदयन्ति । अवान्तरसंघविशेषाणां परस्परं संबन्धप्रकारः समुदायेन समुदायिनः कीदृशी भावना इत्येतादृशा विषया अन्तरा भाषाशास्त्रज्ञानं कथं विशदीभवेयुः ?

## Linguistics to Psychology.

अन्यच्चेदं संमोदस्थानं—यत् अद्य मनस्तत्त्वनिपुणाः भाषाशास्त्रं साहाय्यार्थमुद्वीक्षन्त इति । प्रतीकप्रवृत्त्योः (symbol and

activity) संबन्धविशेषं खलु विषयतया गृह्णाति शास्त्रमिदम् । भावनाविशेषाः सर्वेऽपि अन्ततः क्रियापर्यवसायिनः खलु भवन्ति। क्रियाद्यर्थप्रत्यायनार्थमेव भाषाप्रतीको जीवलोकेन संपादितः । कम्बुग्रीवादिमतोऽर्थविशेषस्य प्रतीकः खलु घटशब्दः, यथा ब्रह्मण ओमिति । प्रतीकज्ञानेन हि प्रवृत्त्यादिज्ञानं संभवति। यथा गामानयेति वाक्येन गवानयनानुकूला प्रवृत्तिः प्रयोज्ये । तथाच भाषाशास्त्रेण संयमनस्तत्त्वं विशदं भवति । विशिष्य च भाषाशास्त्रं नवीन Gestalt Psychology शास्त्रस्यातीवोपकुरुते ॥

Linguistics to Philosophy.

ब्रह्मवादिनोऽपि अद्य शब्दब्रह्मबोधकशास्त्रमिदमतीवोपलालयन्ति । तत्तदर्थबोधकानां पदानां विमर्शकरीत्या स्वारस्यद्योतनार्थं शब्दशास्त्रमन्तरा किमस्ति ?

Linguistics to Natural science.

भौतिकशास्त्रेण साकं भाषाशास्त्रस्यास्ति संबन्धविशेषः । ध्वनिप्रभवाणां स्थानविशेषाणां निर्णये भूतशास्त्रं (Physics) शरीरमर्मशास्त्रं (Physiology) च शाब्दिकं प्रति महदुपकरोति । साधूच्चारणं नाम कण्ठताल्वादिस्थानज्ञानमन्तरा न सकलं भवेत् । तदर्थं Physiology कथमिव नोपकुर्यात् ? तथैव च ध्वनिविवेचकशास्त्रं (Physical Acoustics). यथा शास्त्रान्तराणि इदमुपकरोति तथैवेदं शास्त्रान्तराण्युपकुर्वन्ति । 'परस्परं भावयन्तः श्रेयः परमवाप्स्यथ' इत्यस्य स्वारस्यं प्रपञ्चसामरस्यं च भाषाशास्त्रं कथंकारं न विशदयेत् ?

किम् ? इत्यस्मिन् कार्यद्वये व्यग्रा भूत्वा सूक्ष्मेक्षणिकया ध्वनिनियमान् संपाद्य शारदसुधाकरसमुज्ज्वलेन यशःपटलेन अद्यापि दरीदृश्यन्ते ॥

## ॥ भाषाशास्त्रे चारित्रकप्रमाणम् ॥

### Historical Data of Comparative Philology.

अधुनातनप्रत्यक्षशिक्षा—(Experimental Phonetics) शास्त्रोदयात्परं ध्वनिपरिणामभागे उदर्काः कतिचन विषयाः समधिगताः । प्रत्नानां नूत्नानामपि भाषाविशेषाणां सर्वेषामसंख्येयाः परिणामविशेषाः क्रोडीकृता विवृताश्च । तादृशपरिणामसहस्रेभ्यो यत्किंचिदत्र दृष्टान्ततया उद्ध्रियते ॥

| Modern English. | Old English |
| --- | --- |
| *here* | *hay-re* |
| *king* | *cyning* |
| *bride* | *bryd* |

एतच्चात्र निर्धारितम्, यत्—तादृशपरिणामा भाषासु सर्व... एकरीत्यैव न संभवन्ति । परं तु अन्यदेशकालावच्छेदेन अन्य... रीत्यापि इति । तथैव च प्रायशः सर्वा अपि भाषा उपभाषात्... नापि शकलिताः । पश्यत । द्राविडी तत्तद्देशावच्छिन्नज... विलक्षणविधमुच्चार्यते व्यवह्रियते च । एतेन च भाषाणां प... णामद्वैविध्यं निरीक्ष्यते निशितमतिभिः—(१) देशीयपरिणा... (Local or Geographical change) (२) चारित्रः कालि...

वा परिणामः (Chronological change). तथाच संघघटकजातिविशेषाणां वृत्तिविशेषाणां च विसदृश्यो भाषा वर्तन्त इत्यपि बोध्यम् ॥

भाषाणां परस्परभावना, ततः अनुगततया क्रोडीकरणं च Bopp, Grimm, Pott प्रभृतिभिः गीर्वाणवाणीज्ञानानन्तरं A. D. एकोनविंशतितमे शतके संपादिते । ततश्च भूगोलस्य प्राचीप्रतीचीभागयोः प्रचलन्तीनां भाषाणामसंख्येयानि ध्वनिसाजात्यानि समधिगतानि । तादृशसाजात्यमधोनिर्दिष्टया क्रोडीकरणमुद्रया सुस्पष्टं भवति ॥

Correspondences in Speech-sounds.

| Skt. | Greek | Latin | English | Russian |
|---|---|---|---|---|
| *bharāmi* | *phero* | *fero* | *bear* | *beru* |
| *bhrātā* | *phater* | *frater* | *brother* | *brat* |
| *pañca* | *pente* | ... | *five* | *piat* |
| *pitā* | *pater* | *pater* | *father* | ... |
| *bala* | *belteron* | *de bilis* | ... | *bolu* |
| *dhāman* | *theme* | *fēce* | *deed* | *delo* |
| *daśa* | *deka* | *decim* | *ten* | *desiat* |
| *veda* | *oida* | *vidi* | *wit* | *ved* |
| *trayas* | *treis* | *tres* | *three* | *tri* |
| *dīrgha* | *dolikhos* | ... | ... | *dolgo* |
| *jānāmi* | *gignosco* | *gnosco* | *know* | *zeneui* |
| *śraddhā* | *kardia* | *cordis* | *heart* | *serdtse* |

सहृदयाः ! अत्र ध्वनिपरिणामानामनुगतिविशेषं प्रत्यक्षीकुरुत ॥

| Skt. | Greek | Latin | English | Russian |
|---|---|---|---|---|
| *bh* | *ph* | *f* | *b* | *b* |
| *b* | *b* | *b* | *p* | *b* |
| *dh* | *th* | *f* | *d* | *d* |
| *p* | *p* | *p* | *f* | *p* |
| *d* | *d* | *d* | *t* | *d* |
| *t* | *t* | *t* | *th* | *t* |
| *gh* | - | *h* | *g* | *g* |
| *g* | *g* | *g* | *k* | *g* |
| *k* | *k* | *k* | *h* | *k* |

अत्र अल्पपरिणतिरनुगता । तथाप्यननुगतेव कुत्रचिदाभासेत । शाब्दिकधौरेयाश्च अनुगतिविशेषानेतान् नियमत्वेन भाषयांचक्रिरे । एतन्नियमोल्लङ्घिनोऽपि यद्यपि कतिचन वर्तन्ते, ते Karl Verner, Karl Brugmann प्रभृतिभिः पारिभाषिकस्वरनियतिमवलम्ब्य समीक्रियन्त एव । एतादृशरीत्या ध्वनिनियमतद्विरोधाभासान् शाब्दिकाः समीकृत्य भाषाघटकध्वनिपरिणामा याद्दच्छिका रभसाकृताश्च आसन् इत्यपवादं निराकृत्य भाषाशास्त्रमपि शास्त्रान्तरवत् सनियमं न स्वैरचारि, इत्येतच्च स्थापयामासुः ॥

---

## ॥ ध्वनिपरिणतीनां स्वभावः कारणानि च ॥

### Nature and causes of Linguistic and Phonetic changes.

ध्वनिपरिणतयश्च सामान्यतः पुरुषेषु सर्वत्र अबोधपूर्वमेव प्रवर्तन्ते । शाब्दिकैश्च ध्वनिपरिणतिक्रोडीकरणं विमर्शनार्थमतिवेलं वैलक्षण्यसत्त्व एव भवति । तत्तत्पुरुषीयध्वनिपरिणतिं विहाय तद्घटकसमुदायस्यैव परिणतयः क्रोडीक्रियन्त इत्येतत्स्पष्टीभवति । परं तु तत्तत्पुरुषीयध्वनिपरिणतयश्च तत्र न विस्मरणीयाः शाब्दिकैः । तादृशपरिणतीनां संख्या स्वभावश्च सूक्ष्मदृष्टिभिर्निरीक्ष्यत एव ॥

## ॥ साङ्घिकभाषाः ॥

### Group Languages.

भाषावैषम्यं च भाषाव्यवहर्तृसंघभेदाभेदनिबन्धनं भवति । ज्ञातचरमेवैतत्समेषां प्रेक्षावतां यत्—कश्चित्संघो न केवलं व्यक्तिविशेषैर्घटितः, अपि तु व्यक्तिघटितसमुदाय (Social groups) घटित इति च । महासंघावान्तरसंघयोर्यदपि वैजात्यं, न तद्दुःशकं ज्ञातुम्, अपि तु सुज्ञेयमेवेत्यनुगतिः । महासंघात् महासंघान्तरस्य पुनर्न तथा । तथाहि—आङ्गलमहासंघे अवान्तरसंघाः (Social groups) वर्तन्ते । तदनुसारेण आङ्गलभाषायां परिणतयः । यथा—Literary English, Business English, Negro-English, Rogues' English इत्यादि । एताश्च परिणतीः आङ्गलेया यथा जानन्ति सम्यग्विवेचयितुम्, न तथा इतरे ; विजातीय-

संघान्तरघटकत्वात्तेषाम् । अन्यदेशावान्तरसमुदायावच्छेदेन द्राविडीभेदान् द्राविडदेशीया यथा, न तथा जानन्ति संघान्तरीयाः ॥

## ॥ तत्तद्व्यक्त्युच्चारणावच्छिन्नभेदः कालपरिपाकप्रयुक्तभेदश्च ॥

Static and Historical differentiation.

उक्ताश्च भाषापरिणतिभेदा ओतप्रोतभावेन खलु वर्तन्ते । तत्र Historical ओतत्वेन, Static प्रोतत्वेन च । प्रायशश्च भाषाया जीवितं परिणतिरेव (change) इति तर्क्यते । 'अत्र भाषाविश्रान्तिः' इति भाषापरिणतिविश्रामभूमिर्निर्देष्टुं न शक्यते । यच्च Static इति व्यवह्रियते तदप्यापेक्षिकमेव । कदाचित् परिणामस्य झटित्याधिक्यं कदाचिन्मान्द्यमपि स्यात् । तथापि परिणतिर्नाम अवश्यंभाविनी जीवितभूता भाषायाः ॥

## ॥ चरित्रप्रसिद्धाः तदप्रसिद्धाश्च भाषाः ॥

Recorded and Unrecorded Languages.

भाषाचरित्रविमर्शनं नाम तदीयचारित्रकैः क्रोडीकरणसत्त्व एव पार्यते । महदिदं विषादस्थानं यत्—असंख्येया भाषाविशेषाः पूर्वं प्रवृत्ताः मज्जन्त उन्मज्जन्तश्च आनुश्रविकरूपतया चरित्रलेखनविषया वा न समधिगम्यन्त इति । तेषां च स्वरूपं वर्तमानस्वरूपमवलम्ब्यैव विमर्शनीयम् । तथा च जन्मतः प्रभृति चरित्रसत्त्वे कस्याश्चिद्भाषाया विमर्शनसौकर्यसौलभ्ये स्याताम् । तत्तत्काले भाषायाः कतिसंख्याकाः कतिप्रकाराश्च ध्वन्यर्थपरिणामाः संभूता इति तदैव हि विस्पष्टं भवति ॥

## ॥ ध्वनिपरिणतिप्रकाराः ॥

Various kinds of Phonetic change.

भाषायां पुनः परिणामास्तत्तद्विषयकाः संभवन्ति । यथा—Phonetic, Accentual, Morphological, Lexical, Semantic and Syntactical changes—ध्वनि-स्वर-शब्द-निष्पत्ति-कोश-अर्थ-समभिव्याहारप्रयुक्तभेदाः इति । एतेषु ध्वनिविचारः (Phonetics) शाब्दिकसमये प्रधानांशं भजते, शाब्दिककौतुकं चातीवावहति । तत्र च कारणं नातीव दुःशकं ज्ञातुम् ॥

१. अर्थं समभिव्याहारं चापेक्ष्य ध्वनयस्तु सुलभतरं ग्रहीतुं पार्यन्ते, येन ते सूक्ष्मांशैरपि विमर्शमर्हन्ति ।

२. यतः शब्दान् शब्दनिष्पत्तिमपि विपरिणमयति ध्वनिपरिणतिः, ततः शब्दनिष्पत्त्यर्थपरिणतयः ध्वनिपरिणतिमनुधावन्ति ।

३. किंच शब्दनिष्पत्त्यर्थयोग्यतापरिणतयो भाषीयनयानामनुगततां प्रति जोषंभावमाश्रयन्ते । ध्वनिपरिणतयः पुनरनुगतान् शब्दनयानावहन्तीति अधुना Phonetic laws इत्यपि व्यवहारः समुल्लसति ।

ध्वनिपरिणतयः कुत्रचिदनुगततया वर्तन्ते । अपरत्र तु अतथाविधम् । अनुगत्या पुनः Constitutive or Organic change इति, अतथात्वे Sporadic change इति व्यवहारः । अत्रोदाहरणम्—

Constitutive or Organic change.

| | | | |
|---|---|---|---|
| Latin | *fenestra* | *venire* | *levare* |
| French | *fenetre* | *venir* | *lever.* |

Sporadic change.

| | | |
|---|---|---|
| Old French | *beuvant* | *femier* |
| Mod. French | *buyvant* | *fumur.* |

केषांचित् ध्वनिविशेषाणां तत्सन्निहितध्वनिस्वभावानुसारेण विपरिणामो दृश्यते । यथा—

| | | | |
|---|---|---|---|
| Latin | *centu* | *carau* | *cera* |
| French | *cent* | *carf* | *cire.* |

अत्र लेटिन भाषायां *c* इत्ययं ककारः. French भाषायां तु स एव सकारः, तदुपरितनः अच् अस्पष्टमुच्चार्यते । तस्मात् Conditional, Dependent or Heteronomous sound-changes. ध्वन्यन्तरसन्निवेशसापेक्षा एते परिणामाः ॥

प्राचीनाङ्गलभाषायां विद्यमानः *win* इत्ययं नवीनाङ्गल-भाषायां *wine* इत्युच्चार्यते । अयं तु परिणामः Spontaneous or Autonomous change इत्यभिधीयते । अयं न ध्वन्यन्तर-सापेक्षः । अत्र प्रथमः *i* कारः *i, ie, ei, oi, ai* इत्येवं पञ्चधा विपरिणम्य *wine* इत्येतस्मिन् पदे ऐकाररूपेण परिणमते । अयं Gradual change क्रमिकः परिणामः । एतद्विरुद्धस्तु Sudden change झटिति समुत्पन्नः परिणामः ॥

ध्वनीनां तत्तत्स्थानोत्पन्नत्वेन परिणामः Mechanical change इति कथ्यते । एतद्विरुद्धस्तु Analogous change इति । अत्रोदाहरणम्—

Latin. *amo* Fr. *aime* = Mechanical change.
" *amāmus* " *aimons* = Analogous change.

॥ ध्वनिपरिणामे कारणानि ॥

1. Climate. तत्तद्देशीयशीतोष्णपरिस्थितिः । यतः शीतपीडितानामतथाविधानां च उच्चारणं परस्परविलक्षणं दृश्यत एव ।

2. Modification of Speech-Organ. तत्तद्वचनकरणपरिणतिप्रयुक्तो ध्वनिपरिणामः ।

3. General variability of Pronunciation. उच्चारणस्य विपरिणतिस्वाभाव्यम् ।

4. Historical and cultural conditions. देशचरित्रं विज्ञानाभिवृद्धिश्च ।

5. Genealogical succession. परम्परानुगतिः ।

6. Economy of labour. कार्यलाघवम् । गमध्यै, दाशुषे, कर्तवे इत्यादीनां तुमुन्नन्तादिरूपेण परिणामे कार्यलाघवं हेतुः ।

7. Temper. मनुजवर्गस्य क्रोधशान्त्यादिभावविशेषद्योतनाय प्रयुज्यमानो ध्वनिविशेषः । क्रोधे हुंकारः । तदभावे प्रकारान्तरम् ।

8. Instinct of Imitation. अनुकरणलोलुपतापि हेतुः । कालानुरोधः (Fashion) अपि हेतुः ।

9. Heredity. मातापितृस्वभावानुवृत्तिप्रयुक्तः पुत्रस्य शब्दोच्चारणविशेषः ॥

## ॥ ध्वनिविपरिणतिविशेषाः ॥

## Specific Phonetic changes.

### Vocalization.

हलः अच्त्वेन परिणामः । यथा—

1. English *o* of *swallow* is the Vocalization of *v* of Anglo-Saxon *swealwe*.

2. English *i* of *brain* is a Vocalization of *g* of Anglo-Saxon *bragen*.

3. Dutch *u* of *oud* is Vocalized *l* of Eng. *old*.

4. संस्कृतभाषायां यणां संप्रसारणत्वेन परिणामः ॥

### Diphthongization.

अच्द्वयस्य एकमात्राकः संयोगः । यथा—

1. English *ou* and *i* of *house* and *ice* respectively are the diphthongized *ū* and *ī* of Anglo-Saxon *hūs* and *īs*.

2. Dutch *ei* of *peinzen* is the diphthongized *e* of Latin *pensari*.

### Vowel-breaking.

*r, l, h* —एतेष्वन्यतमेनान्त्ये हल्समूहे परे, *ea, eo, io* इत्येते *a, e, i* एवंरूपेण यथासंभवं विपरिणमन्ते । यथा—

| Old Eng. | Mod. Eng. | Old Eng. | Mod. Eng. |
|---|---|---|---|
| *wearm* | *warm* | *feohtan* | *fight* |
| *feallan* | *fall* | *eahta* | *eight* |
| *heord* | *herd* | *healf* | *half* |
| *seolfor* | *silver* | *liornan* | *learn* |
| *[illegible]or* | *sir* | Vide Page 83. | |

## Monophthongization.

एकमात्राकाच्द्वयसंयोगस्य एकाच्त्वेन परिणामः । यथा—

| | | | |
|---|---|---|---|
| Old Eng. | *doughter* | Mod. Eng. | *daughter* |
| " | *drougth* | " | *drought* |
| Old Germ. | *muoter* | Mod. Germ. | *mutter* |

## Lengthening and Shortening of Vowels and Consonants.

अचां हलां च दीर्घीभावः ह्रस्वीभावश्च Gemination इति कथ्यते। स्वरसन्निवेशः (accent), यतिसन्निवेशः (syllabification) इत्येताभ्यामज्झलां दीर्घीभावो ह्रस्वीभावश्च भवति ॥

यथा—*keep* इत्यत्र ईकारस्य Accent स्वरेण ह्रस्वः *kept* इत्यत्र । एवं *sleep slept; leave left; sheep shepherd.*

## Assimilation.

ध्वनेः ध्वन्यन्तरनिमित्तं तत्सारूप्यं, ताद्रूप्यं वा । तच्च समग्रतया यत्किंचिदंशेन वा । उदाहरणं—तल्लयः । इदं Progressive, Regressive इति द्विधा भवति ॥

तत्र प्राथमिक (Progressive) प्रभेदे पूर्ववर्णः विसदृशमुत्तरवर्णं स्वसदृशं कुर्यात् । यथा— Lat. *collis* < *colnis.* अत्र द्वितीयशब्दस्थः *l* वर्णः स्वोत्तरं *n* वर्णं स्वसदृशं करोति । यथा वा—मातृभाषीय *kasos* इत्ययं संस्कृतभाषायां *śaśas* इति । अत्र प्रथमशकारः द्वितीयं सकारं शकारं करोति । यथा वा संस्कृते प्राकृते च । चक्र चक्क; वज्र वज्ज; सपत्नी सवत्ती; आत्मा अत्ता ॥

अंशतो यथा—लभ्+त=लब्ध । 'झषस्तथोर्धोऽधः' ॥

द्वितीय (Regressive) प्रभेदे उत्तरो वर्णः पूर्ववर्णं विसदृशं स्वसदृशीकरोति । यथा— Latin *intelego* < *inter-lego*; Eng. *gossip* < *godsibb*; Eng. *gospel* < *godspell*. गैर्वाण्याम्—तज्ज, तल्लयः । 'स्तोः श्चुना श्चुः' 'तोर्लि' 'ष्टुना ष्टुः' 'यरोऽनुनासिकेऽनुनासिको वा' ॥

## Dissimilation.

व्यवहितस्य अव्यवहितस्य वा सदृशस्य विसदृशीकरणम् । पूर्ववर्णेन उत्तरवर्णस्य चेद्विसदृशीभावः, सः Progressive इति व्यपदिश्यते । उत्तरेण चेत्पूर्वस्य सः, Regressive इति कथ्यते ॥

तत्राद्यो यथा—

| | | | |
|---|---|---|---|
| Old Eng. | *marbre* | Mod. Eng. | *marble* |
| " | *purpre* | " | *purple* |
| Latin | *turtur* | " | *turtle* |
| Skt. | *puruṣa* | Prākṛt | *purisa* |

द्वितीयो यथा—

| | | | |
|---|---|---|---|
| Latin | *peregrinum* | French | *pelerin* |
| Skt. | *mukuṭa* | Prākṛt | *mauḍa*. |

यथा वा संस्कृते *didyute* इत्यत्र अभ्यासयकारस्य इकारभावः । 'द्युतिस्वाप्योः संप्रसारणम्' ।

यथा वा *vas+syati=vatsyati*. 'सः स्यार्धधातुके' ॥

## Haplology.

सदृशवर्णयोर्वर्णसमुदाययोर्वा अन्यतरस्य लोपः । यथा—

| | |
|---|---|
| Vedic | *tuvir(av)avan ; ir(adh)adhyai* |
| Latin | *nutrix* < *nu(tri)trix* |
| " | *semestris* < *se(me)mestris* |
| " | *stipendiam* < *sti(pe)pendiam* |
| " | *medialis* < *me(di)dialis* |
| English | *idolatry* < *ido(lo)lotria* (Latin) |

पृषोदरादयः शकन्ध्वादयश्च अस्यैवोदाहरणम् ॥

## ॥ ध्वनीनामुपचयापचयौ ॥

### Addition and Loss of sounds.

ध्वनीनामुपचयः (Addition) आदिमध्यान्तस्थत्वेन त्रिविधः । तत्राद्युपचयः Prothesis इति, मध्योपचयः Apenthesis इति, अन्त्योपचयः Paragoge इति च कथ्यते ॥

आद्यो यथा—

| | | | |
|---|---|---|---|
| Anglo-Saxon | *cwesan* | Eng. | *squeeze* |
| Old Eng. | *ekename* | " | *nickname* |
| Sanskrit | *strī (istrī)* | Prākṛt | *itthī* |
| " | *riṇakti* | " | *iriṇakti* |
| " | *ropayanti* | " | *uropayanti* |
| " | *rudhira* | " | *urudhira* |
| Tamil | *rangan* | Tamil | *arangan* |
| " | *rūman* | " | *irūman* |

द्वितीयो यथा—

| | | | |
|---|---|---|---|
| French | *cartouche* | Eng. | *cartridge* |
| " | *caporal* | " | *corporal* |
| Old Eng. | *slumeren* | " | *slumber* |

| | | | |
|---|---|---|---|
| Anglo-Saxon | *brydguma* | Eng. | *bridegroom* |
| Skt. | *api* | Avesta | *aipi* |
| ,, | *dāru* | ,, | *dauru* |
| ,, | *bhavati* | ,, | *bhavaiti* |
| ,, | *paru* | ,, | *pauru* |
| ,, | *eti* | ,, | *eiti* |
| ,, | *taruṇa* | ,, | *tauruṇa* |
| ,, | *guru* | ,, | *gauru* |

तृतीयो यथा—

| | | | |
|---|---|---|---|
| Old Eng. | *ernes* | Eng. | *earnest* |
| ,, | *agens* | ,, | *against* |

ध्वनीनामपचयोऽप्यादिमध्यान्तस्थत्वेन त्रिविधः । तत्राद्यपचयस्य Aphesis or Aphaeresis इति वा नाम, मध्यापचयस्य Syncope इति, अन्त्यापचयस्य च Apocope इति ॥

आद्यो यथा—Eng. *lone* < *alone* ; Eng. *squire* < Old French *escuyer* ; Eng. *bishop* < Latin *episcopus* ; English *story* < Italian *storia* < Latin *historia*. Skt. *sthā*=Gk. *ste* < Idg. *√*es+te*. यथा वा 'श्नसोरल्लोपः'—अस्ति स्तः सन्ति । उच्चारणेऽपि यथा—*knife nife* ; *write rite* ; *arrange range* ; *array ray*.

द्वितीयो यथा—

| | | | |
|---|---|---|---|
| English | *fourteen night* | Eng. | *fortnight* |
| Anglo-Saxon | *aemete* | ,, | *ant* |
| ,, | *mynet* | ,, | *mint* |
| ,, | *elles* | ,, | *else* |

| | | | |
|---|---|---|---|
| English | *pennies* | Eng. | *pence* |
| Old Eng. | *coverchef* | " | *kerchief* |

यथा वा गैर्वाण्यां मध्यमपदलोपी शाकपार्थिवादिसमासः। राजन्+आ=राज्ञा। 'अल्लोपोऽनः'। एवं प्रेम्णा॥

तृतीयो यथा—

*more* उच्चारणे *mor* भवति। *mute* च *mut* इति।

यथा वा गैर्वाण्यां इतश्चेत्यन्त्यलोपः। *abhavat.*

## Metethesis.

कस्यचिद्वर्णस्य एकस्मिन्नेव पदे स्थानवैपरीत्यं (Transposition) Metethesis इति कथ्यते। यथा—

| | | | |
|---|---|---|---|
| Dutch | *borst* | English | *breast* |
| " | *versch* | " | *fresh* < A.S. *ferse* |
| " | *dorschen* | " | *thresh* |
| " | *perseon* | " | *press* |
| " | *torsen* | " | *trousers* |
| Old Saxon | *thurh* | " | *through* |
| " | *hross* | " | *horse* |
| Anglo-Saxon | *gaers* | " | *grass* |
| " | *bridd* | " | *bird* |
| " | *waeps* | " | *wasp* |
| " | *acsian* | " | *ask* |
| Old English | *clapsen* | " | *clasp* |

पदघटकाक्षरव्यत्ययेन पदान्तरनिष्पादनं यथा—

*siṁha* < *hiṁs* ; *nārikela* > *nālikera* ; *marakata* <

*marataka*; *ālānastambhas* > (Pkt.) *āṇāḷakhambho*; *Vārāṇasī* > (coll.) *Benares*.

Compensatory Sound-changes.

एकस्मिन् पदे कस्यचिद्वर्णस्य निमित्तान्तरेण लोपे सति तत्प्रतीकारविधया अन्यत्र नूतनांशागमनम् । यथा—*punar* + *ramatē*=*punā ramate*; *hariḥ* + *ramyaḥ*= *hari ramyaḥ*. 'रो रि' 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' ।

*tān* + *tarūn* = *tāṁstarūn*. मातृभाषायां * *tems*, *teruns* इति पदद्वयमासीत् । तत्र *ns* इति अजन्तानां द्वितीयाबहुवचनप्रत्ययः । हलन्तानां तु *ms* इति । तच्च संस्कृतभाषायां *tams taruns* इति प्रथमं जायते । ततश्च 'संयोगान्तस्य लोपः' इत्युभयत्रापि सकारस्य लोपः । संयोगान्तलोपेन पदविपरिणामः Simplificatory change इति कथ्यते । ततः प्रकृतेन Compensatory नियमेन उभयत्र पूर्वस्य दीर्घः । तयोः सन्धिवेलायां *tāṁstarūn* इति निष्पत्तिः । अत्र पूर्वं लुप्तोऽपि सकारः सन्धिवेलायां पुनरुद्भवत्येव । तथापि तदपगमेन जातो दीर्घः तरून्पदसादृश्येन नापगच्छति ॥

Historical Survival.

इदमत्र विवेचनीयम्—यस्तावत् सकारः अत्र पूर्वं लुप्तोऽपि सन्धिवेलायां पुनरागतः तस्य Historical survival इति नाम । यत्र पूर्वं विद्यमानस्य पश्चात् केनचित् हेतुना लुप्तस्य सन्धिवेलायां पुनरागमनं तस्यायं व्यपदेशः । यथा—अभवन्त्सर्वे, सन्त्सः इत्युभयत्रापि तकारः ॥

यथा वा—'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि।'

*sas + gacchati = sa gacchati*

*eṣas + gacchati = eṣa gacchati*

अत्र लुप्तसकारं रूपं Historical survival. कथम्? *sas* इत्यस्य पर्यायतया मातृभाषायां *sos*, *so* इति पदद्वयमासीत्। तत्र *so* इत्येतत् गैर्वाण्यां सन्ध्यभावकालेऽलक्ष्यमाणं संधिवेलायां *sa* इत्येवमाकारेण पुनरुन्मज्जति। एवं *eṣas* इत्यस्य **eisos*, *eiso* इति द्वयी प्रकृतिः। अन्यत्सर्वं पूर्ववत्॥

यथा वा *hariścandra* शब्दे सकारः Historical survival. मातृभाषायां चन्द्रशब्दस्य **sqendro* इति प्रकृतिः। तत्रस्थः सकारः संस्कृते अलक्ष्यमाणः सन्धिवेलायां पुनरागतः॥

एवं भो देवाः, भो लक्ष्मि, भगो नमस्ते इत्यादौ भोभगोशब्दौ Historical survival. तथाहि—भोशब्दः भवच्छब्दात् संबुद्धौ निष्पन्नः। भगो इति तु भगवच्छब्दात्। इदं च 'विभाषा भवद्भगवदघवतामोच्चावस्य' इति वदद्भिः वैयाकरणैरभ्युपगतमेव। अयमर्थः—एषां रुः स्यात्, अवस्य ओकारो वा संबुद्धौ। भवः इत्यस्य संग्रहः (contraction) भो इति। भगवः इत्यस्य भगो इति च वक्तुं पार्यते। इदं च रूपद्वयं मातृभाषायामप्यवर्तत। तच्च संस्कृतभाषायां संध्यभावकाले अलक्ष्यमाणं संधिवेलायां लक्ष्यते पूर्वोक्तरीत्या इति Historical survival भवति॥

अवसन्+च, राजन्+तव इत्यादौ तु पूर्वसादृश्येन (Formal analogy) वर्णान्तरसमागमः॥

## Anaptyxis.

हल्द्वयमध्ये उच्चारणसौकर्यार्थमचः प्रादुर्भावः Anaptyxis इति कथ्यते । अस्यैव च स्वरभक्तिरित्यपि प्रसिद्धिः ॥ यथा—

| | | | |
|---|---|---|---|
| Sanskrit | *indra* | Vedic | *indara* |
| ,, | *darśata* | ,, | *daraśata* |
| ,, | *pṛthvī* | Sanskrit | *pṛthivī* |
| ,, | *svarṇa* | ,, | *suvarṇa* |
| ,, | *candra* | ,, | *candira* |
| ,, | *bhrama* | Marathi | *bharama* |
| ,, | *prakara* | ,, | *parakara* |
| ,, | *klinna* | Prākṛt | *kilinna* |
| ,, | *snigdha* | ,, | *siṇiddha* |

आदौ तावत् अवर्ण एव उच्चारणसौकर्यार्थं मध्ये संयोजितः । पश्चात् इवर्णादयोऽपि । मनोरथः इतीदमुदाहरणम् । द्विजार्थः सूपः इतिवत् मनोऽर्थ आशयः इत्यस्मिन्नर्थे मनोरथ इति रूपनिष्पत्तिः ॥

## ॥ अथ संधिविचारः ॥

संधिर्नाम वर्णानां पदानां वा विकारावहो विलक्षणः संसर्गविशेषः । स च उच्चारणलाघवानुगृहीततया भाषासु अतिवेलमादृतः । संस्कृतभाषायां हि हल्पूर्ववर्ती प्रतिशब्दः स्वरूपेण व्यवतिष्ठते विना विकारम् । यथा—*prati + gacchati = pratigacchati*. अच्पूर्ववर्ती तु विक्रियते । यथा *prati + agāt = pratyagāt* इति । एवं ग्रीकरोमन्भाषादिष्वपि, येन मातृभाषायामपि संधिसत्ता अध्यवसीयते ॥

## ॥ सन्धेर्द्वैविध्यम् ॥

सन्धिश्च द्विधा भवति—आन्तरो बाह्यश्च (Internal and External). प्रकृतीनां परस्परसन्धिः (प्रत्ययेन सह) Internal इति कथ्यते । पदानां परस्परं तु External इति ॥

तत्राद्यो यथा—*rāma + au = rāmau.*

द्वितीयो यथा—*ramā + īśaḥ = rameśaḥ ; gaṅgā + udakam = gaṅgodakam* इत्यादि ॥

अत्रापि Analogy दृश्यते । यथा—*tat + na = tanna* इति External सन्ध्यनुरोधेन, *svid + na = svinna* इति Internal सन्धिर्भवति । यथा वा—*sas + asti = sosti* इति External सन्ध्यनुरोधेन, *dhuvas + yu = dhuvoyu* इति वेदे Internal सन्धिर्भवति । यथा वा—*vidvas + bhis = vidvadbhiḥ* इति Internal सन्धिवत् *namas + bhis = namadbhiḥ* इति भवितव्ये, *manas + bhara = manobhara* इति External सन्धिसादृश्येन *namobhiḥ* इति रूपनिष्पत्तिः । अन्यत्तु सुधीभिरूह्यम् ॥

## SEMANTIC CHANGES.

एतावता पदानां ध्वनिपरिणतयो विस्तृताः । इदानीं पुनस्तेषामर्थपरिणतयो विचार्यन्ते । अर्थपरिणतिविचारश्चाङ्गल्यां Semantics इति व्यपदिश्यते । अयं च विभागः शाब्दिकप्रकाण्डैः ध्वनिविभागवत् न विस्तृतविचारविषयीकृतः । अत्र कारणम्—ध्वनिविभागः प्राञ्चतया विषयदृष्टान्तादिदानेन शाब्दि-

कावर्जको भवति । न तथा अर्थपरिणतिभागः । किं च ध्वनिवत् अर्थः तत्तत्कालावच्छेदेन निर्णेतुं न शक्यते । चरित्रकालात्प्राक् कस्यचित् शब्दस्यार्थः कथमासीदित्यत्र नियतप्रमाणाभावात् तत्र सौलभ्याभावः । *vayunā, vadas* इत्यादिशब्दार्थनिर्णये विप्रतिपत्तिः नाद्यापि प्रशान्ता । नदलोध्रादिशब्दानामर्थस्तु नाद्यापि निर्णीतः । तथाप्येतद्विभागं प्रति शाब्दिकप्रेम अनल्पमेव । शाब्दिकप्रकाण्डाश्च स्वग्रन्थेषु अस्य भूरिभागं ददति दित्सन्ति च । Breal नामा French शाब्दिकः विभागमिमं मुख्यविषयतया विमृश्य Semantics इति ग्रन्थमपि रचितवानस्ति ॥

परिणतयश्च भाषासु तत्तत्पुरुषप्रकाण्डीयोत्साहेन संभवन्ति । परं तु तादृशपरिणतिभिः श्रोतृवर्गैः संमताभिः संबद्धाभिश्च भवितव्यम् अन्यथा श्रोतृप्रत्ययाभावापत्तेः । समग्रमिदं भाषाशास्त्रं नयद्वयनियतम्—(१) वक्तृनिष्ठवचनलाघवम् (२) श्रोतृनिष्ठ-श्रवणलाघवं च, लाघवपक्षपातित्वान्मतेः ॥

नूतनार्थेषु पदानां शक्तिसंपादनार्थं यत्नः तदनुपपत्तौ नूतनपदकल्पनं च पदार्थपरिणतिनियामकं भवति । प्राचीनसमूहे कोशस्य संकुचितत्वात् संप्रदायानपायस्यातिवेलमादृतत्वाच्च तादृ-शपरिणतयो विरलविरला इति Tucker अभिप्रैति ॥

आधुनिकसमूहे पुनः प्रतिक्षणं नूतनार्थानामतर्कितोपनत-त्वात् तत्प्रत्यायकपदानां वैरल्याच्च पदानि नूत्नतया कल्प्यन्ते पण्डितैः, अङ्गीक्रियन्ते च जनसामान्येन । परं तु तादृशपरिणती-नामौत्कूल्यं त्रिभिरंशैर्नियम्यते—(1) Systematic grammar

(2) Schoolmaster (3) Convention regarding correctness.

पदार्थपरिणतीनां कारणत्रयं पश्यति Tucker—

(१) संकोचः (Specialising or narrowing)

(२) विस्तारः (Generalising or widening)

(३) विनिमयः (Shifting or transferring).

त्रयश्चैते विभागाः सूक्ष्मेक्षणिकया लक्षणावृत्तावेवान्तर्भवन्ति। यथा पङ्कजमित्यत्र विस्तृतस्य लघूकरणं योगरूढ्या। कुशल इत्यत्र संकुचितस्य विस्तारो निरूढलक्षणया। ऋग्वेदस्थः असुरशब्दो वरुणविशेषणमपि भवति। यास्केन च असुशब्दात् निष्पाद्यते। अर्वाचीनकाले तमोगुणभूयिष्ठेषु (असुरेषु) उपयुज्यत इति विनिमयः। अधोनिर्दिष्टमात्रादिपदानि पूर्वमन्तरिक्षादिविस्तृतार्थद्योतकानि भूत्वा पश्चाज्जनन्याद्यर्थेषु संकुचितानि॥

| पदम् | विस्तारः | संकोचः |
|---|---|---|
| *mātā* | अन्तरिक्षं | जननी |
| *śakuna* | पक्षिसंचारः | शकुनं (शास्त्रविशेषः) |
| *vacanīya* | वक्तव्यम् | निन्दा |
| *vidhavā* | मुषितार्थे | पतिविहीनायामेव |
| *ghost* | जीवः | मृतजीवः |
| *punctual* | जागरूकता | कालविषयकजागरूकता |
| *voyage* | प्रयाणं | समुद्रप्रयाणमात्रे. |

Breal विमर्शकस्तु त्रीन् नयान् पश्यति। ते यथा—

(1) The law of Specialisation
(2) The law of Differentiation
(3) The law of Irradiation.

Specialisation.

अत्र प्रथमनयदृष्टान्ततया तरतमद्योतकान् प्रत्ययानुदाहरामः । मातृभाषायां द्वयोरेकद्योतकप्रत्ययाः (Comparative degree suffixes) **ro, *tero, *ior* इति बहव आसन् । पश्चात् **ior* इति रूप एव तेषां संकोचः । तथा संस्कृतभाषायां अपर अधर वरीयस् इत्येतेषां ईयस् इत्यस्मिन् तर इत्यस्मिन्वा संकोचः । तथा लेटिन् भाषायां *superus, inferus, purrior* इत्येतेषां *ior* इत्यस्मिन्संकोचः ॥

Idg. ** ro * tero * ior > * ior.*
Skt. *apara adhara varīyas > īyas* or *tara.*
Lat. *superus inferus purrior > ior.*

तथैव Superlative degree बहुषु एकद्योतकः —

Idg. ** mo * temo * issimo > * issimo.*
Skt. *adhama antima nediṣtha > iṣthan* or *tama.*
Lat. *superus intimus dulcissimus > issimus.*

अत्र प्राचीनभाषास्वपि प्रत्ययानां बाहुल्यं विहाय लाघवार्थं प्रत्ययाल्पीकरणे यत्नातिशय आसीत् । यथा संस्कृतभाषायां तरतमभावद्योतकाः क्रमेण ईयसुन्-इष्ठन्-प्रत्ययाभ्यां, लेटिन्-भाषायामपि *ior, issimus* प्रत्ययाभ्यां लघूकरणम् । एतच्च लघूकरणे प्रथमसोपानायते ॥

Breal महाशयानुसारं प्रायशः सर्वत्र तरप्तमवर्थेषु परिगृहीतः प्रत्ययः अन्यतरद्योतक एव । सर्वथापि आधिक्यस्यैव विवक्षितत्वात् । विग्रहवाक्यं च तथैव । यथा — अतिशयेन प्रियः प्रियतरः प्रियतमो वा ॥

Differentiation.

तत्तदर्थशक्तानां समानधातुप्रकृतिकानां पदानां विभिन्नार्थेषु अभियुक्तप्रयोगः Differentiation इति कथ्यते । अथवा एकार्थत्वाविशेषेऽपि तत्तच्छब्दप्रयोजकभावतारतम्यम् ॥

तत्राद्यस्योदाहरणम् —*manas, manus, mati, manana manyus* < √*man*, to think. एषु सर्वेषु मनधातुः प्रकृतिः ॥

द्वितीयस्योदाहरणम् —*ambā, mātā* इत्येतयोः समानार्थकयोरपि अभिप्रायभेदेन प्रयोगः ॥

Irradiation.

सजातीयनिष्ठचिह्नस्य क्रमशो विजातीयेष्वप्युद्भावनम् । यथा —गच्छतीतिवत् गत्यर्थकधातुनिष्ठ 'छ' कारचिह्नस्य ऋच्छति पृच्छति इत्याद्यगत्यर्थकानां धातूनामपि संयोगः । अयं Irradiation इति कथ्यते ॥

केचित्तु शाब्दिका अर्थविपरिणतीनां पाञ्चविध्यं पश्यन्ति— 1. Restriction (संकोचः) 2. Expansion (विस्तारः) 3. Degradation (अधोनयनं) 4. Elevation (उन्नयनं) 5. Variation (अन्यथानयनं) इति । पञ्चैत उक्तेष्वेव त्रिष्वन्तर्भावयितुं शक्यन्त इत्येतेषामुदाहरणानि तत एवोन्नेयानि ॥

Doublets = एकस्यैव शब्दस्य accent भेदेन आकृतिद्वयम् । यथा — *history, stóry* इति । यथा वा गैर्वाण्याम् *bhittá, bhinna* < √*bhid*.

## ॥ प्राचीनपदलोपः ॥

Disappearance of old words.

संस्कृतभाषायामतिप्राचीनानि पदानि अद्यत्वे लुप्तानि अथवा लुप्तप्रायाणि । उदाहरणम् — अतिप्राचीनानि केवलं वैदिककर्मोपयुक्तार्थद्योतकानि पदानि — वेदिः दर्वी आसन्दी पुरोडाशः सोमलता एवमादीनि । तथैव यूरोप्देशे क्रैस्तवमताक्रमणानन्तरं प्राचीनमतोपयुक्तानि परःशतं नष्टान्येव ॥

## ॥ नूतनपदाविर्भावः ॥

Appearance of new words.

नूतनदेशाधिगमनादिभिः पदानि इदंप्रथमतया उद्भाव्यन्ते । भिन्नभाषाव्यवहर्तॄणां परस्परमेलनेन भाषीयपदपदार्थपरिणतयो भवन्ति । यथा संस्कृते होरा–दीनारशब्दौ ग्रीकभाषातः, महल्लशब्दः अरबिक्भाषातः, द्राविड्यां स्टेपन् हास्पिटल् टिकेट् एवमादय आङ्गलीतः, जल्दि-खजानाप्रभृतयो भाषान्तरतश्च परिगृहीताः ॥

## ॥ पदार्थसंकोचविकासौ ॥

Restriction and Expansion of meaning.

अत्र प्रथमस्य Specialisation उदाहरणान्येव विपयतयानुसंधेयानि । द्वितीयस्तु अजहल्लक्षणाभेद एव । यथा—गोस्वामी इत्यत्र पूर्वं पशुमात्रवाचिगोशब्दस्य इदानीं धनसामान्यवाचित्वम् ॥

## Pejorative tendency.

आदौ समीचीनार्थकस्य पश्चात् जुगुप्सितार्थबोधकत्वम् । अथवा वस्तुतो निन्दार्थकानां आपाततो निन्दाच्छादनेन प्रयोगः । यथा देवानां प्रिय इत्यादयः । राजन्यबन्धुरिति क्षत्रियापशदे । अनयोः प्रियबन्धुशब्दौ pejorative suffixes इति कथ्येते ॥

## Associative tendency.

एतच्च साहश्येन स्यात् संसर्गेण वा । अश्वोरस्स्थलावस्थित-चर्मविशेषवाचककक्ष्याशब्दनिर्वचने 'कक्षं सेवते अयमपीतरो मनुष्यकक्षः, एतस्मादेव बाहुमूलसामान्यादश्वस्य' इति ब्रुवता यास्कचरणेनापि Association tendency अनुगृहीतं भवति । यथा वा—*patra*=leaf, इदानीं paper. यथा वा—*pāda*=foot, इदानीं part. 'पादः पद्यतेः । अयमपीतरः प्रभागपादः, पशुपादप्रकृतिः ।' संसर्गेण यथा—मषी=Ink अञ्जनसंसर्गात् लेखनसाधने प्रयुक्तः । यथा वा पापसंसर्गिणि पापशब्दप्रयोगः । एवं वृक्षफलयोः आम्रपदप्रयोगः लिङ्गपरिवृत्त्या केवलम् । यथा च मृच्छकटिके 'विषमभराक्रान्ता नौरिव पर्याकुला उज्जायिनी आसीत् ।' अत्र उज्जायिनीशब्दस्य तन्निष्ठजनेषु प्रयोगः । रूपक-भेदोऽप्यत्रैवान्तर्भवति ॥

---

## ॥ ध्वनिनियमानां सादृश्यस्य च सप्रपञ्चो विचारः ॥

The conception of Phonetic Laws and Analogy.

A. D. 1870 तमवर्षादर्वाचीनतया भाषाशास्त्रे ध्वनिनियमाः सादृश्यं चेति विषयद्वयं सर्वोत्कर्षेण वर्तते, पौनःपुन्येन विचार्यते च । सत्यमिदं श्लाघापदमाधुनिकशाब्दिकानां यत्—शब्दशास्त्रं शास्त्रान्तरैस्तुलयितुं ध्वनिनियमसादृश्याभ्यामेव ते पारयन्तीति । एतदधिगमनात्प्राक् पदनिष्पत्तिप्रकारः पाणिनिव्याकरणशिक्षादिषु यद्यप्यधिगतः, तथाप्याधुनिकविमर्शकरीत्यननुसारितया न सम्यगिव प्रतिभाति । अधुना A. D. एकोनविंशशतके भाषाशास्त्रे नूलतया Historical and Scientific प्रकारानुसारमधिगतेषु विषयेषु Phonetic law, Analogy च प्रधानभूतौ ॥

### Phonetic or Sound-law.

कोऽयं ध्वनिनियमः ? नियमशब्दस्य कोऽर्थः ? राजनीत्यां पुनः Law पदमर्थान्तरं प्रदिशति । नियमानुवर्तिनामिष्टं फलम्, अतथाभूतानां तु अनिष्टमिति व्यवस्था तत्र । प्रभुसंमितत्वान्नियमस्य । भाषाशास्त्रे पुनरेवम्—

'A phonetic law of a language is a statement of a regular practice of that language at a particular time in regard to the treatment of a particular sound or group of sounds in a particular setting.'

अयमाशयः—यस्यां भाषायां यस्मिन् काले यस्मिन् देशे ये वा ध्वनिनियमाः प्रवर्तिता अधिगता वा तस्यां भाषायां तस्मिन् काले तस्मिन् देशे ते नैव व्यभिचरन्ति । अन्यदेशकालावच्छेदेन तेषां व्यभिचारेऽपि न कापि क्षतिः । पूर्वमेव चारितार्थ्यात्तेषाम् । यथा—आद्गुणप्रभृतयः रमा+ईशः=रमेशः इत्येवं गैर्वाणवाण्यां संस्कृतसमये यद्यप्यव्यभिचारिणः, तथापि *Rāma is* इत्याङ्गल्यां व्यभिचरन्ति । तथा 'सोऽचि लोपे चेत्पादपूरणं' इति नियमः संस्कृतभाषायाः classical समये सस् +इति=स इति इत्यव्यभिचार्यपि वैदिकसमये सेति इति व्यभिचरति । एते नियमाः प्रायशः अपवादं विना व्यवतिष्ठन्ते । प्रायश इत्यनेन सापवादत्वमपि सूचितम् ॥

किंच तत्र तत्र भाषासु विद्यमानसाजात्यदर्शनेन अनुगता अपि नया अनुमीयन्ते । तादृशा नया अनुगततया भाषाचक्रवालमपि व्याप्नुवन्ति । केचित्तु प्रतिनियतभाषामेव । तत्र प्रकृतिनियमाः (Natural laws) निरवच्छिन्नं तत्र तत्र साधारण्येन वर्तन्ते । अपुरुषकृतत्वात्प्रकृतेः । भाषानियमास्तु अतथाविधं सावच्छिन्नं तत्र तत्र भिद्यन्ते । पुरुषकृतत्वात्तासाम् ॥

यद्यपि ध्वनिनियमा बहवो वर्तन्ते, तथापि स्थालीपुलाकक्रमेण कतिचिदेवात्र उदाहरामः । तत्र प्रथमं तालव्यनियमो निरूप्यते ॥

## ॥ तालव्यनियमः ॥

### The Law of Palatalization.

तालव्याधिगमनं च भाषाशास्त्रेऽतिवेलं महीयते । अयं च नियमः प्राचीनाब्विचारशोधने महदुपकरोति । को वा शाब्दिकस्तालव्यनियममिमं तत्पूर्वतया अधिजगामेत्यनिश्चयात् तादृशनियमप्रयुक्तप्रथा न कस्याप्येकस्येति विषादास्पदमेव । तादृशनियमाधिगन्तृनिश्चयमधिकृत्य A. D. एकोनविंशशतकादारभ्य एतावत्पर्यन्तं प्रचरन्वादकोलाहलो निष्प्रयोजनक एव ॥

प्रथमतस्तालव्यनियममधिकृत्य आनुषङ्गिकतया A. D. 1875 तमे वत्सरे स्वोपन्यासमध्ये Vilhelm Thomsen नाम्ना शाब्दिकेन किंचिदिव सूचितम्. Palatalization पदं च तदुपन्यासक्रोडीकरणपत्रिकायामप्रकाशितायां लिखितमस्ति । अनन्तरं पदमेतत् क्रमशः परम्परया Johannes Schmidt, Esaias Tegner, Collitz, de Saussure, Karl Verner प्रभृतिभिः विमर्शकवर्यैः प्रकाशितासु पत्रिकासु असकृदुपयुक्ततया तत्तद्विमर्शकेन परिष्कृततया च शाब्दिकसमयप्रसिद्धं वरीवर्ति । सोऽयं नियमः मातृभाषास्थमध्याधःकण्ठ्याक्षराणि अचश्च विषयीकरोति । मातृभाषायां त्रयः कण्ठ्यवर्गाः—अधःकण्ठ्यः, मध्यकण्ठ्यः अग्रकण्ठ्यश्चेति । ते क्रमेण यथा—

1. *q qh g̨ g̨h* Back Gutturals (Velars)
2. *k kh g gh* Middle Gutturals
3. *k̂ k̂h ĝ ĝh* Front Gutturals (Old Palatals)

*ṅ* अनुनासिकस्तु सर्वेषां साधारणः ॥

## ॥ अथ नियमाकारः ॥

"During the Aryan period, prior to the change of the Primitive Indo-Germanic *ĕ* into *ă*, Indo-Germanic Velars and Middle Gutturals when followed by *ĭ*, *ĕ*, *i̯* (Palatal vowels and semi-vowel) are changed into the corresponding Palatal explosives in the Aryan."

अयं भावः—आर्यदशायां मातृभाषीय *ĕ* कारस्य *ă* कारात्मना विपरिणामात्प्राक् *ĭ*, *ĕ*, *i̯* कारेष्वन्यतमेनानुसृताः मातृभाषीया मध्याधःकण्ठ्या यथानुगुणं तालव्या भवन्ति ॥

$$\left.\begin{matrix} q & qh & g & gh \\ k & kh & g & gh \end{matrix}\right\} + \breve{i}, \breve{e}, \underset{\frown}{i} > c\ ch\ j\ jh.$$

## ॥ अत्रोदाहरणानि ॥

| Idg. | Skt. | Latin | Gothic |
|---|---|---|---|
| * *qe* | *ca* | *que* | |
| * *qerus* | *carus* | | *hverr* |
| * *qetu̯ōres* | *catvāras* | *quatuor* | *fidwōr* |
| * *peṅqe* | *pañca* | *quinque* | *fimf* |
| * *ki̯eu̯etai̯* | *cyavate* | | |
| * *k̂ukis* | *śucis* | | |

## ॥ अथ प्रत्युदाहरणम् ॥

Idg. * *kakud* > Skt. *kakut* ; Idg. * *kālos* > Skt. *kālas* ; Idg. * *egāt* > Skt. *agāt* : Idg. * *k̂ukros* > Skt. *śukras* ; Idg. * *qoteros* > Skt. *kataras* ; Idg. * *kark* > Skt. *karkas* or *karkaṭa*.

अत्र प्रत्युदाहरणेषु तालव्यनियमो न प्रवर्तते । कुतः ? *ĕ, ĭ, i̯* कारान्यतमेनाननुसृतत्वात्कण्ठ्याक्षराणाम् ॥

अत्रेदं बोध्यम्—नियमोऽयं इण्डोजर्मानिक्भाषासु मातृभाषास्थ *ĕ* कारस्य आर्यन्भाषायां *ă* कारात्मना विपरिणामात्प्रागेव सावकाशः । न तु ततोऽप्यनन्तरम् । कालविशेषे इण्डोजर्मानिक् *ĕ, ŏ, ă* काराः आर्यन्भाषायां *ă* कारात्मना विपरिणेमुः । तादृशरीत्या यदि *qe* कारः *qa* कारात्मना परिणतः तर्हि पश्चात्तालव्यनियमो निरवकाश एव, *q* कारस्य तालव्याचाननुसृतत्वात् ॥

एवं स्थिते अत्र Georg Curtius नामा शाब्दिकवरो बभ्राम । कवर्गीयशाखात्रयानभिज्ञस्तु सः । Skt. *kataras*, Lat. *quoteros*, Gk. ποτεροs, Ion. κοτεροs, Gothic *hwapar* इत्यत्र वैषम्यं ज्ञात्वा समीचिकीर्षया वक्ष्यमाणरीत्या अभिप्रेयाय । तद्यथा—संस्कृते विद्यमानस्य *ca* कारस्य मातृभाषायां *ka* इत्येव प्रकृतिः । स एव संस्कृते *ca* इति, लेटिन् भाषायां *que* इति च विपरिणमते । एवं *kataras* इत्यस्य मातृभाषायां *kataras* इत्येव प्रकृतिः । लेटिन् भाषायां *queteros* इति विपरिणामः । यत्र प्रकृतिभूत *ka* कारनिष्ठ *a* कारः *e* कारात्मना परिणमते, तत्रैव संस्कृते *ca* कारात्मना परिणामः । यत्र तु *ka* कारस्थ *a* कारस्य *a* कारात्मनैव स्थितिः, तत्र *k* कारो न विक्रियते. *a* कारश्च *e, o* कारयोः प्रकृतिरिति हि प्राचां मतम् । प्रकृतिभूते *kataras* इत्यस्मिन् विद्यमानस्यैकस्यैव *a* कारस्य एकत्र *a* कारात्मना अपरत्र *e* कारात्मना अन्यत्र *o* कारात्मना परिणामे निमित्तं तु

न ज्ञायते । अनुभवबलमेव तत्र मानम् । तादृशः परिणामः कथम् ? इत्याकांक्षायां *ka* कारनिष्ठ *a* कारस्यास्ति शक्तित्रयमेवम्—

$a^1$ $a^2$ $a^3$

$a^n$ $a^e$ $a^o$

एतच्च प्राचीनशाब्दिकैः Bopp प्रभृतिभिः अङ्गीकृतम् । आधुनिकैः पुनर्गौरवदुष्टत्वात् अननुगमाच्च मतमिदं निराकृतम् । यथोक्ततालव्यनियमः अधिगतो मूर्धाभिषिक्तश्च ॥

यद्यप्येतन्नियमोल्लङ्घिनः केचन शब्दाः समुपलभ्यन्ते, तथापि न ते तत्त्वतस्तथा । तादृशाः शब्दा अनुकरणशब्दा वा स्युः, सादृश्यप्रयुक्ता वा, भाषान्तरेभ्य अधमर्णतया उद्धृता वा ॥

## ॥ मूर्धन्यनियमः ॥

Fortunatov's Law.

Cerebrals or Cacuminals = मूर्धन्यानि ।

'ऋटुरषाणां मूर्धा' इति गीर्वाणवाण्यां मूर्धन्याक्षराणि श्रूयन्ते । तत्रायं विशयः—

इमानि संस्कृते स्वाभाव्येन वर्तन्ते, उत आधमर्ण्येन भाषान्तरेभ्य उद्धृततया, विजातीयभाषासाहचर्यसंस्कारप्रयुक्ततया, आहोस्वित् यत्किंचिदनुगतध्वनिनियमप्रयुक्ततया ? इति । किं तावत्प्राप्तम् ? संस्कृते इमानि स्वाभाव्येन असाधारणविधं वर्तन्त इति । कस्मात् ? इण्डो-जर्मानिक्भाषोत्पन्नेषु भाषाकदम्बकेषु संस्कृत एव विद्यमानत्वात्तेषां मूर्धन्यानाम् । मातृभाषायां पुनः

मूर्धन्यानामत्यन्ताभावात्, संस्कृतभाषाव्यतिरिक्तासु तद्वंशोत्पन्नासु च तेषां तथात्वात्, इण्डोजर्मानिक्वंशबाह्यानीमानीति निपुणमनुमिनुमः । गीर्वाणवाण्यां पुनस्तान्यध्यक्षयामः । तस्याश्च तद्वंशोत्पन्नत्वं निर्विवादम् । सति चैवं संस्कृते अनितरसाधारण्येन विद्यमानानि तानि तत्स्वभाव इत्यस्मात्किमन्यत् ॥

पक्षमिममसहमानः Bishop Caldwell नामा एवं प्रत्यवतिष्ठते । मातृभाषामूलकत्वात्संस्कृतस्य कारणगुणवता तेन भाव्यम् । 'कार्यं निदानाद्धि गुणानधीते ।' मूर्धन्यांशे पुनर्नयमिममुल्लङ्घ्य वर्तते भाषेयम् । किमिति । कारणाभावे स्यात्स्वभाव इति । न ह्यकारणं कार्यमुत्पद्यते । तस्मात् तदिह वक्तव्यम्—येन संस्कृते मूर्धन्यसत्त्वं सकारणं स्यात् । तच्च द्राविडीसाहचर्यसंस्कारसध्रीचीनता इति श्लिष्टमिव प्रतिभाति । अतो द्राविडीभाषात आधमर्ण्येन गृहीतानि वा स्युः, तत्साहचर्यसंस्कारप्रयुक्तानि वा स्युः । तादृशपदानि द्राविडीतः संस्कृते संक्रान्तानि नैव नाध्यक्षयामः । यथा—क्तवत्वन्तः मीनादिपदानि च । अतो द्राविडीसाहचर्यमत्र निदानमिति ॥

एवं स्थिते Fortunatov नामा France देशीयो दोषज्ञः मतमिदं समूलघातं जघान । अयमस्याशयः—यदुक्तं क्रैस्तवमतप्रचारकेण Caldwellनाम्ना मूर्धन्यानि द्राविडीतः संस्कृते समधिगतानीति, तन्न सम्यक् । कुतः ? असमीचीनावगतिमूलकत्वात्तस्य । केयमसमीचीनावगतिः यन्मूलकं Caldwell मतम् ? उच्यते । द्राविडीविशेषस्य कस्यचिद्वेदभाषासमकालिकत्वावगतिरेव ॥

तथाहि—Caldwell मतं एतदवगमयति यत्— अद्य समुपलभ्यमानानां द्राविडीविशेषाणां मूलभूता काचित्प्राचीनद्राविडी आर्यसंस्कृतभाषामूलभूतवेदभाषासमकालमवर्तिष्टेति । तथा चैवं स्यात् यत्—आदौ Primitive Dravidian इति काचन भाषाऽऽसीत् यदनन्तरं संस्कृतं द्राविडी चोद्बभूवतुरिति । तदेतदपेशलं प्रमाणविरुद्धं च । कुतः ? अद्य विद्यमानानि चारित्रकप्रमाणानि द्राविडीशाखामूलभूतां द्राविडभाषां B. C. प्रथमशतकात्प्राक् नैव पारयन्त्युन्नेतुम् । भवेत् Caldwell मतं समीचीनं, यद्यत्र प्रमाणसत्ता । तच्च न संभवतीदानीम् ॥

यदुक्तं क्तवतुमीनशब्दप्रभृतयो द्राविडीयाः संस्कृते विद्यन्ते येन तत्साजात्यात् मूर्धन्यान्यपि तथैव स्युरिति, तत्तुच्छम् । कस्मात् ? द्राविड्यपेक्षया प्राचीनतरासु वेद-अवस्तादिभाषास्वपि क्तवतुप्रत्ययो वारंवारं श्रूयते । किंच मीनशब्दसाजात्येन मूर्धन्यान्यपि द्राविडीत एव स्युरिति राजाज्ञा वा ? स्युर्वा । तावता किं नश्छिन्नम् ? उक्तरीत्या अतिप्राचीनेषु वेदेषु मूर्धन्यानि सन्त्येवेत्येतान् दोषान् कथं वा तिरयेत् Caldwell ? यांश्च दर्शयांबभूव दोषज्ञः Fortunatov. प्रदर्श्य च स्वमतं ध्वनिनियमत्वेनोल्लिलेख । सोऽयं नियमस्तन्नामाङ्कितया Fortunatov's law इति वोभवीति । अयमत्र नियमाकारः—

"The Primitive Indo-Germanic dentals in combination with *l* become cerebrals in the Aryan; but in combination with *r* they do not undergo the change."

अयमर्थः—मातृभापीयदन्त्यानि सकारश्च *l* कारसंयोगेन आर्यभापायां मूर्धन्यानि भवन्ति । *r* कार संयोगे पुनर्न तथा । अयमत्र क्रमः—

*l+t>ṭ; l+th>ṭh; l+d>ḍ; l+dh>ḍh; l+n>ṇ; l+s>ṣ;* whereas *r+t>rt* and so on.

नियमश्चायं शाब्दिकैर्बहुभिर्यद्यप्यङ्गीक्रियते, तथापि Brugmann, Bartholomae, J. Schmidt, Wackernagel इत्येतैः शाब्दिकवर्यैः न समग्रतया अङ्गीक्रियते । इमे च मूर्धन्यत्वं दन्त्यानां प्राकृतभापासाहचर्यादित्यभिप्रयन्ति । तथापि निर्दुष्टत्वात् Fortunatov मतं प्रभवति मतान्तराण्याभासयितुम् ॥

अथोदाहरणानि—

| Idg. | Skt. | Latin | Gothic | Lith |
|---|---|---|---|---|
| **pūlnis* | *pūṇis* | *palma* | *folm* | |
| **pelnos* | *paṇa* | | | *pelnas* |
| **ṷūlnī* | *rūṇī* | | *walus* | |
| **bhals* | *bhaṣati* } *bhāṣate* } | | | *balsas* |
| **paltos* | *paṭas* | | | |
| **sphalt* | *sphaṭāmi* | | | |
| **ŏlnus* | *āṇis* | *ulna* | *aleina* | |

दन्त्यरेफसंयोगे पुनः दन्त्यानां मूर्धन्यत्वं न संभवति । यथा—

| Idg. | Ved. Skt | Cl. Skt. | | |
|---|---|---|---|---|
| **kertō* | *kartāmi* | *kṛntāmi* | *kertu* | (Lith.) |
| **uerto* | *vartāmi* | *varte* | *verto* | (Lat.) |
| **merdō* | *mardāmi* | *mardayāmi* | *mordeō* | " |
| **ardho* | *ardha.* | | *ardyti* | (Lith.) |

Uhlenbeck पण्डितस्तु नियमस्यास्य कतिचिदपवादाभामान् क्रोडीकृत्य तत्त्वतस्ते नास्य नियमस्यापवादाः, परं तु प्राकृतसाजात्यप्रयुक्ता इति निपुणतरं निश्चिनोति ॥

अत्र Uhlenbeck विदुषा उद्धृता अपवादाभासाः—

*bhaṭas* < *bhṛtas* < * *bhertos*
*kaṭas* < *kartanam* < * *korto*
*kaṭus* < **kartus*
*naṭas* < *nartaka* (*nṛtya*) < * *nerto*

अत्र *bhaṭas* इत्यस्य मातृभाषायां *bheltos* इत्येव प्रकृतिरतो नास्त्यपवादत्वमिति केचित् । सर्वथापि Uhlenbeck एवं अभिप्रैति 'They are often original dentals, which are lingualised by Prākṛtic influence.' एत पूर्वं दन्त्याः सन्तः प्राकृतसाहचर्यात् तद्वासनावासिततया मूर्धन्यत्वं भजन्त इति । तादृशपरिणतिर्न विरला । तथाहि—*aṭati* < *atati* < √*at*; *bhaṇati* < *bhanati* < √*bhan*. अत्र पूर्वं दन्त्यतया स्थितानां प्राकृतवासनयैव मूर्धन्यत्वम् । उच्चारणसौकर्यार्थं वा तत्त्वं स्यात् ॥

तथा च ये शब्दाः Fortunatov नियमोल्लङ्घिन इवाभान्ति ते प्राकृताद्गुद्धृताः स्युः । तद्वासनावासिततया वा स्युः । तत्साजात्यप्रयुक्ता वा स्युः । उच्चारणसौकर्यार्थं वा स्युः, यथा क्रोष्टुशब्दस्य तृज्वद्भावः 'तृज्वत्क्रोष्टुः' इत्यनेन ॥

---

## GRIMM'S LAW.

A. D. 18 तमशतकपश्चाद्भागे 19 तमशतकपुरोभागे च शब्दरङ्गे बहून्विषयानधिजगाम शाब्दिकसरणिः। तादृशसरण्यां Schlegel नामा प्रथमः। किंच Bopp निरतिशयप्रतिभावान् इण्डोजर्मानिक्भाषाणां सम्यग्विमर्शनेनानुगतान्नियमान् संपादयामास. Bopp समकालिकश्च Jacob Grimm नामा इण्डो-जर्मानिक्भाषाः विहाय तद्धटकजर्मन्भाषायामेव परिनिष्ठितो भूत्वा शब्दनयानधिजगाम। यतस्तन्नियमः जर्मन्भाषामेव केवलं विशिनष्टि। Grimm विदुषो जीवितकालः A. D. 1785—1863.

॥ नियमाकारः ॥

मातृभाषास्थिताः *k t p* वर्णाः जर्मन् भाषायां *h th f* इति, *g d b* वर्णाः *k t p* इति, *gh dh bh* वर्णाः *g d b* इति च क्रमेण स्युः, *ś* वर्णः *s* इति च ॥

*k t p > h th f*
*g d b > k t p*
*gh dh bh > g d b*
*ś > s.*

अथोदाहरणानि—

*k t p > h th f.*

| Idg. | Skt. | English | Gothic | German |
|---|---|---|---|---|
| * *kṛd* | *hṛd* | *heart* | *hairto* | *herz* |
| * *treies* | *trayas* | *three* | *þreis* | |
| * *pod* | *pad* | *foot* | | *fuss* |

*g d b > k t p.*

| Idg. | Skt. | English | Gothic | German |
|---|---|---|---|---|
| * *a$\hat{g}$ros* | *ajras* | *acre* | *akrs* | *acker* |
| * *de$\hat{k}$m̥* | *daśa* | *ten* | *taihun* | *zehn* |
| * *dont* | *dant* | *tooth* (once *tonth*) | | |
| * *lamb* | *lambate* | *sleep* | *slēpan* | |

*gh dh bh > g d b.*

| | | | | |
|---|---|---|---|---|
| * *$\hat{g}$hansos* | *haṁsas* | *goose* | | *gans* |
| * *medhi̯os* | *madhyas* | *middle* | *midjis* | |
| * *dhei̯ō* | *dhayāmi* | | *daddja* | |
| * *bherō* | *bharāmi* | *bear* | *baira* | |

अत्र उक्तरीत्या निर्दिष्टाक्षराणां परिणामं भूयो भूयो दृष्ट्वा Grimm नियममिमं प्रचारयामास । परं तु प्रत्युदाहरणान्यप्यस्य दृश्यन्ते । तानि यथा—

| Idg. | Skt. | Gothic | English |
|---|---|---|---|
| * *$\hat{k}$m̥tom* | *śatam* | *hunda* | *hundred* |
| * *bendh* | *bandh* | *binda* | *bind* |
| * *sapton* | *saptan* | *sibun* (Ohg.) | *seven* |

इत्येतेष्वन्येषु च स्थलेषु Grimm नियमस्य प्रत्यूहदर्शनात् ध्वनिनियमानां च निष्प्रत्यूहत्वात् Grimm नियमशोधकं तत्प्रत्युदाहरणानां सम्यक्तासंपादकं नियमान्तरं Verner नामा अधिजगाम । सोऽयं नियमः तदुपज्ञतया Verner's law इत्येव प्रतीतः ॥

—

## Verner's Law.

मातृभाषीयशब्दानामन्ते मध्ये वा श्रूयमाणानां *k t p s* वर्णानां (*ht hs ft fs sk st sp* एतद्बहिर्भूतानां) जर्मानिकभाषासु *g d b r* वर्णाः क्रमादादेशाः स्युः, यदि तेषामादिरुदात्तो न स्यात् ॥

स्वरनियमे च संस्कृतमेव शरणम् । मातृभाषास्थितानां पदानां स्वरविशेषाधिगमने ग्रीक्भाषास्वरः विशिष्य वैदिकस्वरश्च प्रदीपायेते । मातृभाषास्थाचां सम्यक्तया अनधिगमात्, गीर्वाण-भाषास्वरव्यञ्जनानां सम्यक्तया स्थितत्वाच्च । अत एव च Comparative Philology शास्त्रे संस्कृतस्यातीवोपयोगः । *trayas madhyas* इत्यादिषु आद्ये उदात्तस्य विद्यमानत्वात् Grimm's Law निष्प्रत्यूहं संचरति ॥

### Verner नियमोदाहरणानि ॥

| | Skt. | Latin | Gothic | English |
|---|---|---|---|---|
| *k* | *yuvaśás* | *juvencus* | *juggs* | *young* |
| *t* | *śatám* | *centum* | *hunda* | *hundred* |
| *p* | *limpā́mi* | *lippus* | *bi-leiba* | *be-life* (O.E.) |
| *s* | *snuṣā́* | *nurus* | | *snoru* (O.E.) |

तथा च यानि पदानि Grimm नियमस्य प्रत्युदाहरणानीव प्रतिभान्ति तत्रादावुदात्तस्याभावात् मध्ये अन्ते वा विद्यमानत्वात् Verner नियमस्य प्रवृत्तिः ॥

---

## Hermann Grassmann's Law or the Law of De-aspiration.

Primitive Indo-Germanic भाषायां विद्यमानानां हलां तथा संस्कृते च हलां प्रायशः सादृश्यदर्शनात् संस्कृते लक्ष्यमाणयोः *bodhāmi, badhnāmi* इत्यनयोः मातृभाषायां *beu̯dhō, bn̥dhnomi* इति क्रमेण प्रकृती अभूतामित्यापाततोऽनुमीयेत । तथा सति Grimm नियमानुसारेण *beu̯dho, bn̥dhno* इत्यत्र च *b* कारेण जर्मन्भाषायां *p* इति भवितव्यमिति सिध्यति । लक्ष्ये तु *binda* (Germ.) इत्यत्र Grimm नियम उल्लङ्घित इव प्रतिभाति । तन्मा शङ्कीति Hermann Grassmann नामा शाब्दिकवरः Verner वत् नियमान्तरमधिजगाम । तद्यथा—

Primitive Indo-Germanic धातुषु लक्ष्यमाणानां झपां मध्ये आदिभूतो झप् आर्यन्ग्रीक्भाषयोः सवर्णजश् भवति । तथैव च तादृशानां ख छ ठ थ फ एतेषां मध्ये आदिभूतः सः खादिः चय् भवति ॥

अयं भावः—एकस्मिन् पदे विद्यमानेषु वर्गचतुर्थाक्षरेषु बहुषु मध्ये आदिभूतः सः तृतीयो भवति । यथा—Idg. * *bheu̯dhō* > Skt. *bodhāmi*. एकपदस्थानां बहूनां aspirate वर्णानां मध्ये प्राथमिकः aspirate वर्णो लुप्यते । वर्गद्वितीयचतुर्थानां यः *h* कारस्तस्य aspirate इति नाम । अभ्यासे चर्च इति पाणिनिसूत्रमप्येतन्मूलकमेव. Grassmann नियमस्य संस्कृतभाषायां ग्रीक्भाषायामेव च प्रवृत्तिः ॥

| | | | | |
|---|---|---|---|---|
| Idg. | * *bheu̯dhō* | > | Skt. | *bōdhā́mi* |
| " | * *bhn̥dhnōmi* | > | " | *badhnāmi* |
| " | * *dhidhēmi* | > | " | *dádhāmi* |
| " | * *g̑heg̑hóna* | > | " | *jaghana* |
| " | * *ghr̥dhi̯ō* | > | " | *gr̥dhyāmi.* |

तत्सिद्धं संस्कृते लक्ष्यमाणस्य बोधामि बध्नामीत्यस्य च मातृभाषायां *beu̯dh, bn̥dh* इति धातुद्वयं न प्रकृतिः, किं तु *bheu̯dh, bhn̥dh* इत्येवेति । अभान्त्सीत् बुभुत्सा इत्यादिषु विधीयमानो भष्भावः Grassmann नियमं कटाक्षयतीव । एवं स्थिते Grimm नियमस्य उदाहृतस्थले नैव व्यभिचारः शङ्क्य इति सर्वमवदातम् ॥

---

## ॥ स्वरविचारः ॥

## ACCENT.

भाषाया ध्वनिपरिणतिषु स्वरः (Accent) प्राधान्यमर्हति। Accent इति पदमर्थद्वयं प्रदिशति, अतः तत्तदर्थविवक्षाकाले विशेषणविशिष्टं प्रयुज्यते— Pitch-accent, Stress-accent इति. Stress-accent च यूरोपियनभाषासु प्रसिद्धतया विशिष्य च आङ्गल्यभाषानिबन्धे विमृश्यते । संस्कृतप्राचीनग्रीकभाषयोः Pitch स्वरस्य प्रसिद्धिः । भारतीयैः वैदिकाभरणादिषु वैदिकस्वरप्रक्रियाग्रन्थेषु स एव विमृष्टो दृश्यते । तावता ग्रीकसंस्कृतयोः

Pitch स्वर एव केवलं आङ्गलभापादिषु Stress स्वर एवेति नायमेकान्तः । सर्वत्रापि उभयसाधारण्यात् । वैशेष्यात्तु तद्वादस्तद्वाद इति न्यायेन यत्र यदधिकं दृश्यते सा तत्स्वराङ्कितभापेति व्यपदिश्यते । प्रतिज्ञाकाले Stress स्वरयुक्तं वचनं, प्रश्नकाले Pitch स्वरयुक्तं भवति आङ्गल्याम्. *cat went there* (Stress). *cat went there ?* (Pitch).

Stress स्वरस्य नामान्तराण्यपि विद्यन्ते—Expiratory or Emphatic or Dynamic Accent इति । यस्यां मात्रायां Stress स्वरः प्रयुज्यते तस्या उच्चारणकाले श्वासाशयेभ्यः कण्ठनालद्वारा अधिकमिव सबलमिव च श्वासो निःसरति. Pitch स्वरस्य Musical or Chromatic Accent इत्यपि व्यवहारः । सङ्गीते प्रसिद्धः सरिगमपधनीत्यादिस्वराणां यो ग्रामविशेपमूर्च्छनादिः तत्र Pitch स्वरः प्रसिद्धः । गीतप्रधानेषु भापाविशेपेषु Pitch स्वरस्यैवाधिक्यम् । वेदभापायां विशिष्य Pitch स्वर एव वरीवर्ति । यत्र मात्रोच्चारणकाले कण्ठगोळके पतनोद्गमने प्रतीयेते तत्र Pitch-Accent व्यापार एव । ग्रीक्भापायामपि संस्कृतवत् Pitch स्वरस्यैवाधिक्यम् ॥

सर्वथा सर्वेपामप्यक्षराणां यद्यपि प्रतिनियतो मात्राविशेपो दृश्यते तथापि यत्र उच्चारणे पतनोद्गमने विशिष्य क्रियेते तत्रैव Pitch-accent. यथा—आ ये इत्यत्र ॥

Stress स्वरस्य च अयं स्वभावः, यत् स्वपूर्वस्वोत्तरवृत्तिमात्राः लघूकरोति इति । लघूकरणं चाङ्गल्यां weakening

इति कथ्यते । तथा च येषां पदानां मात्राः लुप्यन्ते तत्र तल्लोपः Stress स्वरप्रयुक्तः स्यादिति Giles अभिप्रैति । 'वष्टि भागुरिरल्लोपं' इति न्यायोऽपि एतत्कटाक्षयतीव ॥

एवं च Pitch, Stress इति स्वरद्वयं मातृभाषायामप्यवर्ततेत्यत्र न संशयः । 'कार्यं निदानाद्धि गुणानधीते' । मातृभाषायाः प्रथमावस्थायां Stress स्वरस्य प्राधान्यं स्यात् । मध्यमायां तूभयोः समप्रधानता । अन्त्यावस्थायां पुनः Pitch स्वरस्य प्राधान्यम् । अत एव च परिणतमातृभाषाया उद्धृतायां वेदभाषायां Pitch स्वरस्य प्राधान्यमिति शाब्दिका आधुनिका अभिप्रयन्ति ॥

Stress, Pitch स्वरद्वयेऽपि त्रैविध्यं पश्यति Giles. प्रधानस्वर उदात्तः (Principal Accent), मध्यमस्वरः अनुदात्तः (Secondary Accent), स्वराभावः स्वरितः (Absence of Accent) इति । स्वरस्थानान्यनेकानि स्युरेकस्मिन पदे. Pitch स्वरे—स्थायी स्वरः, पतन स्वरः, उत्पतन स्वरः, पतदुत्पतन, उत्पतत्पतंश्चेति पाश्चात्यविद्वांसः ॥

संस्कृतभाषायां पुनः स्वरेण समासार्थादिकमुक्तविधं विपरिणामं भजते । विशिष्य स्वरस्य यथा वेदे प्राधान्यं दृश्यते न तथा भाषान्तरेषु । यथेन्द्रशत्रुः स्वरतोऽपराधात् इति श्रुतत्वात् । स्वरं प्रमाणीकृत्यैव च Verner's law प्रवर्तते ॥

---

## ॥ सादृश्यविचारः ॥
## ANALOGY.

सर्वा अपि भाषाः कालक्रमेण नवनवां दशामारूढा बहून्विपरिणामान्भजन्ते । ते च विपरिणामा भाषान्तरेभ्य आगतैर्नवीनैः पदैः सकलं नोत्पद्यन्ते, अपि तु तद्भाषागतानि प्राचीनानि पदानि विपर्यस्यापि जायन्ते । तेषां च विपरिणामानां नियामका ध्वनिनियमाः केचन तत्तद्भाषानुगुण्येन विमर्शकैः परिकल्पिताः । विपरिणामाः क्वचिज्जातिभेदात् क्वचित्तद्देशीयशीतोष्णभेदात् प्रायशः सुखोच्चारणाभिलाषेण बहुशस्तालव्यादिस्थानेषु प्रयत्नपरिजिहीर्षया च जायन्ते । ध्वनिनियमाश्च गणितशास्त्रे परिकल्पितसंख्यानियमवत् स्वभावतत्त्वविमर्शकपरिकल्पितनियमवच्च सर्वदा न व्यभिचरन्तीति वक्तुं न शक्यन्ते । प्रतिध्वनिनियमं बहून्यपवादस्थलानि दृश्यन्ते । ध्वनिनियमाः प्रतिनियतभाषास्वेव प्रतिनियतदेशकालयोरेव अभ्युपगम्यन्ते । एते तत्तद्भाषायां बहून्रूपभेदानुत्पादयितुं प्रयतन्ते । सादृश्यं च तद्विरोधेन बहून्रूपभेदान्समीकृत्य यावच्छक्ति रूपलाघवं संपादयति । ध्वनिनियमानामपवादस्थलानि सादृश्येनोपपाद्यन्त इत्यत एव हेतोः तेषां नियमानामव्यभिचरितत्वं सादृश्यस्वभावनिबन्धनं वक्तव्यं भवति ॥

यद्यस्ति अर्थतः साम्यं केषांचन शब्दानां रूपतोऽपि साम्यं तेषु कुतो न भवेत् ? अत एव मातृपितृभ्रातृवाचकत्वेन बन्धुवाचकत्वेन अर्थतस्तुल्यानां शब्दानां रूपतोऽपि साम्येन भवितव्य-

## ॥ सादृश्यविचारः ॥
## ANALOGY.

सर्वा अपि भाषाः कालक्रमेण नवनवां दशामारूढा बहून्विपरिणामान्भजन्ते। ते च विपरिणामा भाषान्तरेभ्य आगतैर्नवीनैः पदैः सकलं नोत्पद्यन्ते, अपि तु तद्भाषागतानि प्राचीनानि पदानि विपर्यस्यापि जायन्ते। तेषां च विपरिणामानां नियामका ध्वनिनियमाः केचन तत्तद्भाषानुगुण्येन विमर्शकैः परिकल्पिताः। विपरिणामाः क्वचिज्जातिभेदात् क्वचित्तत्तद्देशीयशीतोष्णभेदात् प्रायशः सुखोच्चारणाभिलाषेण बहुशस्तालव्यादिस्थानेषु प्रयत्नपरिजिहीर्षया च जायन्ते। ध्वनिनियमाश्च गणितशास्त्रे परिकल्पितसंख्यानियमवत् स्वभावतत्त्वविमर्शकपरिकल्पितनियमवच्च सर्वदा न व्यभिचरन्तीति वक्तुं न शक्यन्ते। प्रतिध्वनिनियमं बहून्यपवादस्थलानि दृश्यन्ते। ध्वनिनियमाः प्रतिनियतभाषास्वेव प्रतिनियतदेशकालयोरेव अभ्युपगम्यन्ते। एते तत्तद्भाषायां बहून्रूपभेदानुत्पादयितुं प्रयतन्ते। सादृश्यं च तद्विरोधेन बहून्रूपभेदान्समीकृत्य यावच्छक्ति रूपलाघवं संपादयति। ध्वनिनियमानामपवादस्थलानि सादृश्येनोपपाद्यन्त इत्यत एव हेतोः तेषां नियमानामव्यभिचरितत्वं सादृश्यस्वभावनिबन्धनं वक्तव्यं भवति ॥

यद्यस्ति अर्थतः साम्यं केषांचन शब्दानां रूपतोऽपि साम्यं तेषु कुतो न भवेत्? अत एव मातृपितृभ्रातृवाचकत्वेन बन्धुवाचकत्वेन अर्थतस्तुल्यानां शब्दानां रूपतोऽपि साम्येन भवितव्य-

मिति *brother* इतिवत् *father, mother* इति रूपान्तरमपि निष्पन्नम् । अत्र Verner विमर्शकपरिकल्पितनियमानुसारेण स्वरात्पूर्ववर्तनस्य संस्कृतभाषागततकारस्य थकारविपरिणामाभावात् *fader, mader* इत्येव न्याय्येन रूपेण भवितव्यम् । तं Verner ध्वनिनियममुल्लङ्घ्य स्वरात्परे भ्रातृशब्दगते तकार इव स्वरात्पूर्वयोः मातृपितृशब्दगततकारयोरपि थकारदर्शनमातिदेशिकस्वभावेनैवो-पपादनीयम् । एवं संबन्धिशब्दानां मध्ये पितृशब्दस्य पितुरिति रूपदर्शनेन पतिसखिशब्दयोः तदतिदेशेन पत्युः सख्युः इति कथं न भवेत् ? एवमातिदेशिकस्वभावः शब्दनिष्पत्तिप्रकारे ऐकरूप्यं शब्दोच्चारणे लाघवं चापादयति । अतो ध्वनिनियमैरव्यभिचरि-तत्वसिद्धयेऽपेक्ष्यमाण आतिदेशिकस्वभावो यावद्भाषासु स्वशक्तिं प्रदर्शितवानिति स्फुटीकरिष्यामः ॥

यद्यपीयं शङ्का उदियात् यत्पाणिन्यादिमुनित्रयपरिकल्पित-नियमानुसारेण व्यवह्रियमाणायां संस्कृतभाषायामातिदेशिकस्व-भावस्य न कथंचिदप्यवकाश इति । अथापि संहिताभागं ब्राह्मण-भागमारण्यकोपनिषद्भागौ लौकिकसंस्कृतं च क्रमेण परिशीलय-तामस्माकमनुभूयत एव कालक्रमेण विपरिणामः संस्कृतभाषाया-मपि । किंच प्राकृतभाषाभिः साकं संस्कृतभाषायाः परिशीलने स्पष्टमिदं विमर्शकानां क्रमशो विपरिणामदर्शनम् । अपि चास्म-त्प्रादेशिकभाषाभिः मिथः परिशीलने सुस्पष्टमिदमातिदेशिक-स्वभावस्य सर्वास्वपि विपरिणामहेतुत्वम् । अतो नैवांशेनाप्यता-र्तिदेशिकस्वभावविपरिणामात् गतिनिरुद्धाशङ्कातः ॥

अस्ति तालव्यीकरणं नाम ध्वनिनियमः कश्चित्। मातृभाषागतोऽधःकण्ठ्यो मध्यकण्ठ्यश्च तालव्याच्परकस्तालव्यो भवतीति। चकार जघानेत्यादिकमुदाहरणम्। कृधातोः हन्धातोश्च द्वित्वेऽभ्यासस्थः कण्ठ्यस्तालव्यो जातः। भाषान्तरानुसारेण मातृभाषायामुन्नीयमानोऽभ्यासाज्वर्णः *e* कारः, धात्वज्वर्णश्च *o* कारः। अत एवाभ्यासे तालव्यीकरणं, न धातौ। एतस्य ध्वनिनियमस्यापवादस्थलानि बहून्यातिदेशिकस्वभावेनैवोपपादनीयानि दृश्यन्ते॥

यथा—कर्तुमिति तुमुन्नन्ते रूपे चर्तुमिति तालव्यदर्शनं न्याय्यम्। प्रथमाचः अकारस्य *e* कारप्रकृतिकत्वात्। अत एव प्राचीनपारसीकभाषायां *cartanaiy* इति तालव्य एव दृश्यते। अथापि कण्ठ्यदर्शनं कुतः चकार इत्यादिरूपाणामतिदेशादुपपादनीयम्। एवं कः कम् कतर इत्यादिरूपेषु ओकारप्रकृतिकाकारपरकत्वेन कण्ठ्यदर्शनं न्याय्यम्। अत एव Latin भाषायां *quod* इति *o* कारपरकः कण्ठ्य एव दृश्यते। किं कियान् कीदृक् इत्यादौ इकारपरकत्वेऽपि कण्ठ्यदर्शनमातिदेशिकस्वभावेनैवोपपादनीयम्। अत एव चित् इत्यत्र तालव्यो दृश्यते। प्रायशः इकारपरकत्वेन रूपसाम्येऽपि अर्थवैषम्यात् किमित्यादौ प्रवृत्त आतिदेशिकस्वभावः अत्र न प्रवृत्त इति तर्क्यते॥

एवं कण्ठ्यस्थाने तालव्यदर्शनमातिदेशिकस्वभावनिबन्धनमपि दृश्यते। तथाहि। वचिधातुः वाच्शब्दश्च मातृभाषायां कण्ठ्यविशिष्टः। अत एव उक्तः वक्तुं इत्यादिरूपेषु मूलवर्णः कण्ठ्य आत्मानं लभते। अत एव च Latin *vōx vocis* कण्ठ्य-

विशिष्टे एव दृश्येते । वाच्शब्दात्प्रथमैकवचने वाक् इति कण्ठ्यवि-
शिष्टरूपदर्शनं न्याय्यं सकारपरकत्वेन तालव्याच्परकत्वाभावात् ।
वाचः वाचि इत्यनयोः एकारप्रकृतिकाकारपरत्वेन इकारपरत्वेन च
तालव्यनियमप्रवृत्त्या तालव्यदर्शनमपि न्याय्यम् । अथापि वाचौ
वाचं इत्यादौ *o* कार *m* कारमात्रपरत्वेन तालव्यध्वनिनियमाप्र-
वृत्त्या दृश्यमानस्तालव्यः वाचः वाचि इति रूपसादृश्येनैवोपपाद-
नीयः । अन्यथा वाकौ वाकं इत्येव न्याय्यं स्यात् । वाचमित्यत्र
न केवलं तालव्यदर्शनम् अकारदर्शनमपि देव इत्याद्यकारान्तशब्द-
रूपातिदेशाल्लभ्यमिति वर्णनीयम् । एवं दिश्यत्रमुदाहृतम् । एव-
मन्यान्यपि कण्ठ्यस्थाने तालव्यदर्शनस्य तालव्यस्थाने कण्ठ्यदर्श-
नस्य चातिदेशिकस्वभावनिबन्धनस्योदाहरणानि स्वयमूह्यानि ॥

स्नुषा इत्यस्मिन्पदे आकारान्तत्वदर्शनं अश्वा रमा इत्यादिरू-
पसाजात्यात् स्त्रीत्वद्योतक-आकारसंयोजनेनैव निर्वाह्यम् । Greek
भाषास्थ *nurus* पदानुसारेण, Latin भाषास्थ *nurus* पदानु-
सारेण च सकारान्तमेव मातृभाषायां मूलपदं परिकल्पनीयं भवेत् ।
अतो गैर्वाण्यां आकारान्तदर्शनमातिदेशिकस्वभावेनैवोपपद्यते ॥

तुन्दयति तोन्दयति इति रूपद्वयं दृश्यते । अत्र बुध् धातो-
र्बोधयतीति रूपदर्शनवत् तोन्दयतीति दृश्यते । णिचि परे स्वाभावि-
कस्य उकारस्य बोधयतीति ओकारभावो न्याय्यः । तुन्दयतीत्यत्र
उकारो न स्वाभाविकः । तुद् धातोः तुदतीति रूपे लब्धे च आग-
न्तुकोऽयमनुस्वारः । अतः स्वाभाविकोकारवत् आगन्तुकस्याप्युका-
रस्य तोन्दयतीति ओकारभावः आतिदेशिकस्वभावनिबन्धनः ।

एवं स्फुट् धातोः स्फोटयतीति उकारस्य ओकारभावस्तन्निबन्धनः । टकारदर्शनानुसारेण मूलभूतऋकारस्थाने आगतोऽयमुकार इत्यभ्युपगन्तव्यम् । अतस्तुलयति स्फुटयतीत्युभयत्रापि आगन्तुकोकारस्य ओकारभावोपपत्तिः बोधयतीति स्वाभाविकस्य ओकारस्यातिदेशनिबन्धनेति वर्णनीयम् । एतान्यन्यानि च आतिदेशिकनियममुपनयन्ति शाब्दिकसभावलोकम् ॥

A. D. एकोनविंशतितमे शतके पाश्चात्यशाब्दिकप्रवराः Delbruck प्रभृतयो ध्वनिनियमानामपवादा वर्तन्ते न वेति सम्यग्विचारयामासुः । तादृशविचारणावसरे उक्तरीत्यापवादाभासान् दृष्ट्वा सादृश्यमधिजग्मुः । ध्वनिनियमानामपवादा इव ये आभान्ति ते नियमान्तरव्याप्याः अथवा भाषान्तरेभ्य आधमर्ण्येन संगृहीताः अथवा सादृश्येनैव स्युः इति तत्र कारणत्रयं निरूप्य ध्वनिनियमा नैवोल्लङ्घनीया इति राद्धान्तयामासुः । तत्र सादृश्यं (Analogy) अत्र विचारयामः ॥

किंप्रभवमिदं सादृश्यम् ? भाषा हि किंचिदुद्दिश्यैव प्रवर्तते । उद्देश्यं च परस्परमभिप्रायाविष्करणरूपम् । अतो व्यवहर्तॄनपेक्ष्यैव भाषास्थितिः । शाब्दिकानां मेधाविभवैश्च तत्र तत्र भाषा उत्तेजिता परिष्कृता च । तादृशोत्तेजनपरिष्कारप्रकारेषु सादृश्यं महत्तया प्रवर्तते । उपपादितं चेदमधस्तात् यत्— ध्वनिनियमसादृश्याधिगमः अतीते शतके भाषाशास्त्रं शास्त्रान्तरैः साकं समतुलामारोपयामासेति । मनुष्याणामन्तःकरणपरिणामेषु

तथा च लाघवानुगृहीततया सिद्धप्रक्रियं शब्दं मनसि कृत्वा तदनुसारेण प्रक्रियान्तरकल्पनमेव साजात्यमित्युक्तं भवति । एतादृशसाजात्यं पुरस्कृत्य पदनिष्पत्तौ शब्दानां तत्तदन्तेषु, विभक्तिषु, धातूनां लकारेषु च बहवः परिणामाः संपद्यन्ते । एतन्मनसि कृत्वैव शाब्दिकाः केचन Morphology विभागस्य Analogy एव मूलस्तम्भायते इत्यभिप्रयन्ति । याश्च प्रक्रियाः नियतध्वनिनियमोल्लङ्घिन्य इवाभान्ति ताः साजात्येनानुगृहीता इति तासामुद्दामत्वं न शङ्कनीयम्. Irregular morphemes were the result of analogical process इति Vendyres अभिप्रैति ॥

शब्दशास्त्रस्य शैशवे तादृशसाजात्यस्य शक्तिमजानाना जरच्छाब्दिकाः साजात्यम Linguistic lapse or False analogy इति निरदिक्षन् । परं तु इतः कतिचित्संवत्सरेभ्यः प्रागेव तादृशसाजात्यस्य निर्दुष्टता अधिगता. Otto Jespersen नाम Analogical levelling (सादृश्येन समीकरणम्) इति तस्य निर्दुष्टतामुक्त्वा सादृश्येन भाषायाः 'Progress' वृद्धिरेव, न तु 'Decay' क्षयः इत्यभिप्रैति ॥

सादृश्यं च विभागत्रयवत् । यद्यपि इयत्तया तत्र विभागं कर्तुं न पार्यते तथापि शाब्दिकसमये सामान्यतो विभागत्रयमभ्युपगम्यते । साजात्यस्य प्रत्येकव्यवहर्तृसापेक्षत्वात् एकैकस्य च मनोभावस्य ज्ञातुमशक्यत्वाच्च सामान्यत इत्युक्तम् । विभागत्रयं च—(1) Formal analogy (2) Logical analogy (3) Proportional analogy.

## Formal Analogy.

कस्यचित्पदस्य अंशसाजात्येन विजातीयपदान्तराणामंशेषु तादृक्षता Formal analogy. यथा ऋकारान्तमात्रादिशब्दसाजात्यात् विजातीयेकारान्तपतिशब्दस्य ङसिङसोरुत्वं पत्युः इति । यथा वा—

| Idg. | Skt | Lat | Goth. | Eng. |
|---|---|---|---|---|
| * *bhrātēr* | *bhrātā* | *frāter* | | *brother* |
| * *patér* | *pitā́* | *pater* | *fadar* | *father* |
| * *mātér* | *mātā́* | *māter* | *mōdar* (Olug.) | *mother* |

अत्र *brother* इत्यस्मिन् पदे प्रथममात्रायां accent पतति । तस्य च मातृभाषायां *bhrātēr* इति प्रकृतिः, यस्यां t इत्यस्मात् प्राक् उदात्तस्य श्रवणात् *th* कारान्तता परिणामो न्याय्यः । [illegible] *father* इत्यत्र तु मातृभाषायां *t* कारान्त्यसंयोगात्परस्य श्रवणात् *t* कारस्य *d* कारान्तता परिणाम एव न्याय्यो भवेत्, न तु *th* कारान्तता । तथैव च A.D. 1500 समयपर्यन्तप्राचीनेषु [illegible] विशिष्य Chaucer ग्रन्थेषु *d* कारान्तेन परिणामः [illegible] इति [illegible] पुनः *th* कारान्तता [illegible] सादृश्य[illegible] स्यात् ?

*k* कारो भवति, *bh* कारयोगे च *ḍ* कारो भवति इत्यस्ति कश्चित् ध्वनिनियमः । तथा च *diś+s* इति स्थिते *dik* इति, *diś+bhiḥ* इति स्थिते *diḍbhiḥ* इति भवितव्यम् । एवमेव *viś+s=vik, viś+bh=viḍbh* इति च क्रमेण भवितव्यम् । तथा च प्रथमैकवचने *dik, vik* इति, तृतीयाद्विवचनबहुवचनयोः *diḍ, viḍ* इति च समीचीनम् । लक्ष्ये पुनः *dik digbhyām, viḍ viḍbhyām* इति दृश्यते । कारणं च तत्र Logical Analogy एव । तत्र तावत् *diś* शब्दे प्रथमाविभक्तौ *dik* इति रूपस्य समीचीनतां सिद्धवत्कृत्य तत्सादृश्येन तृतीयाद्विवचनादिष्वपि *dik* इत्येव रूपं कल्प्यते । तथा *viś* शब्दे तृतीयादिविभक्तिषु *viḍ* इति रूपं समीचीनमिति कृत्वा तत्सादृश्येन प्रथमाविभक्तावपि *viḍ* इत्येव रूपकल्पनम् ॥

*Bhavāmi, bodhāmi* सदृक्षतया *bhavāvaḥ, bhavāmaḥ, bodhāvaḥ, bodhāmaḥ* इत्यादिष्वपि दीर्घकल्पनं Logical सादृश्यस्योदाहरणं भवति । तथाहि । विभाव्यतां तावत् *bhavāmi bodhāmi* प्रभृतिषु अंशत्रयस्य सत्ता । यथा—*bhava+a+mi, bodha+a+mi* इति । मातृभाषायामप्येवमेवानयोः *bheu̯-o-mi, bheu̯dh-o-mi* इत्यंशत्रयम् । तत्र चास्त्येकत्वद्योतकसंशद्वयम *a mi, o mi*, इति. *o, mi*, इति उत्तमपुरुषैकवचनप्रत्ययौ. *o* इत्यस्यानन्तरं भ्रमात् Athematic धातुसादृश्येन *mi* प्रत्ययः अत्राधिकतया पश्चान्निवेशितः ॥

Proportional Analogy द्वारैव । अत्रैव Proportional Analogy अन्यविधमपि (प्रतीपमपि) प्रवर्तते । तद्यथा–*sich* इत्यस्य चतुर्थ्यां *sir* इत्यभावात् तत्र *sich* इत्यस्यैव च प्रयोगात् तत्साजात्येन क्वचित् जर्मन्भाषासु *mir*, *dir* इत्यनयोरपि तिरस्कारः । तथा चाऽनुरूप्यं (Analogical levelling) उन्नतस्य नम्रीकरणेन वा स्यात् नम्रस्य उन्नतीकरणेन वा । यथा संस्कृते रामशब्दसादृश्यात् दारशब्दस्यापि एकवचनद्विवचनयोः दारः दारौ इति कविर्यद्यकल्पयिष्यत् तर्हि Proportional Analogy द्वारैवाभविष्यत् ॥

लुङ्विचारेऽपि Proportional साजात्यस्योल्लासः । तद्यथा—संस्कृतभाषायां विद्यमानः *siṣ* Aorist तावत् Proportional साजात्येनैवोद्भूतः । तथाहि— अस्ति लुङश्चातुर्विध्यम् । यथा—

| | | | |
|---|---|---|---|
| *s* | aorist | *e.g.* | *anaiṣam, ajaiṣam* |
| *sa* | " | " | *adaikṣam* (Ved.), *adhukṣata, alikṣat* |
| *iṣ* | " | " | *abodhiṣam, apāviṣam* |
| *siṣ* | " | " | *ayamsiṣam, anamsiṣam.* |

एषु प्रथमः बहुलतया प्रचारे वर्तते । तत्र प्रमाणम् 'च्लेः सिच् ।' द्वितीयस्य तु 'शल इगुपधादनिटः क्सः ।' तृतीयस्य तु इडयुक्तः सिच् । चतुर्थस्य 'यमरमनमातां सक्च ।'

'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' । अचीकमत् अशिश्रियत् अदुद्रुवत् असुस्रुवत् । अयं चङ्विशिष्टो लुङ् *a*-aorist इति कथ्यते ॥

आपाततो लुङ् द्विविधः । यथा—

| A. Root aorist | B. Sigmatic aorist |
| --- | --- |
| 1. *a* aorist | 1. *s* aorist |
| 2. aorist without *a* | 2. *sa* " |
| | 3. *iṣ* " |
| | 4. *siṣ* " |

तत्र Root-aorist नाम सिजादिरहितः लुङ्प्रत्ययः । सोऽपि द्विधा—अकारसहितः तद्रहितश्च । अकारोऽयं चङ् । चङ्रहिते पुनः अडागमः धातुः केवललुङ् इत्येव स्युः । यथा–अगात् अस्थात् अभूत् अदित अधित इति ॥

अत्रेदं बोध्यम् । अस्यतिवक्तीत्यादिसूत्रस्य पुषादिद्युतादि-सूत्रस्य च यान्युदाहरणानि तानि प्रथमस्य विषयाः । गातिस्थाघुपा-सूत्रस्य ह्रस्वादङ्गादित्यस्य चोदाहरणानि द्वितीयस्य विषयाः. Sigmatic aorist नाम सिजाद्युपलक्षितः लुङ्प्रत्ययः । पूर्वोक्तरीत्यायं तु *s sa iṣ siṣ* इति चतुर्धा भवति ॥

प्रकृतमनुसरामः । अत्र णीञ् प्रापणे इति धातोः विचारः ।

प्रथमपुरुषः *a-nai-s-t > anaiḥ*

मध्यमपुरुषः *a-nai-s-s > anaiḥ*

उत्तमपुरुषः *a-nai-s-am > anaiṣam.*

तत्र प्रथममध्यमपुरुषयोर्दर्शितरीत्या *anaiḥ* इत्यविशेषा-द्व्यावृत्त्यभावेन व्यामोहः स्यात् । इतरत्र या प्रापणे इत्यादौ अया-सीः व्यासीः इत्यस्ति विशेषः, येन न तत्र व्यामोहः । तद्वदत्रापि

विशेषः संपादनीयः । तदर्थमुभयत्रापि *is* अधिकतया योज्यते । तथा च रूपं *anais-is-t, anais-is-s.* अतश्चोभयत्रापि *is* अवयवस्य *s* कारस्य लोपे, Compensatory change नियमेन इकारदीर्घे कृते सकारस्य षत्वेन अनैषीत् अनैषीः इति च रूपं संपाद्यम्. *s* इत्यस्यानन्तरं *iṣ* इति योजनेन *s+iṣ= siṣ* इति *siṣ* aorist निष्पत्तिः । अत्र *iṣ* इति अधिकयोजनं Proportional Analogy द्वारा ॥

॥ इति सादृश्यनिरूपणम् ॥

---

Semantics विभागे ३८ पुटे Vowel-breaking विषये अवधेयोंऽशः स्पष्टप्रतिपत्तये किंचिदिव प्रदर्श्यते ।

Eng. *warm* पदस्य प्राचीनाङ्गलभाषायां *wearm* इति, प्राचीनगातिक्भाषायां *warmjan* इति, ततोऽपि प्राचीन-लेटिन् भाषायां *formus* इति च रूपम् । तेनेदमनुमीयते यत्—प्राचीनलेटिन्गातिकभाषयोः अभग्नः अच् प्राचीनाङ्गल्यां *ea* इति भग्नः । अयमेव भङ्गः Vowel-breaking इति व्यपदेशमर्हति । नवीनाङ्गल्यां पुनः यथापुरं स एव पुनरपि समश्लिष्यत्—इति । एवमेव—

| | | | | | |
|---|---|---|---|---|---|
| Latin | *fallere* | O. E. | *feallan* | Mod. E. | *fall* |
| Gothic | *silubr* | ,, | *seolfor* | ,, | *silver* |
| Latin | *sex* | ,, | *seox* | ,, | *six* |
| Ohg. | *fehtan* | ,, | *feohtan* | ,, | *fight* |
| Latin | *octo* | ,, | *eahta* | ,, | *eight* |
| Ohg. | *lirmēn* (*lernēn*) | ,, | *liornan* | ,, | *lear* |

एतेन *r*, *l*, *h* एतेषु अन्यतमेनारब्धे संयुक्तहलि पर ए
अङ्भङ्ग इत्यप्यनुसंधेयम् ॥

॥ उपोद्घातः समाप्तः ॥



॥ श्रीः ॥

# ॥ ध्वनिचर्चा ॥

## PHONOLOGY

अत्र तावन्मातृभाषावस्थितानां स्वराणां तथा व्यञ्जनानां च कथं वा संस्कृतभाषायां विपरिणामः इत्यादि निरूप्यते। संस्कृतभाषायां तावत् षोडश स्वरा व्यवतिष्ठन्ते। यथा—

*a ā i ī u ū ṛ ṝ ḷ ḹ e ai o au*
*ṁ* (anusvāra), *ḥ* (visarga).

मातृभाषायां तु सप्तत्रिंशत् स्वरा व्यवतिष्ठन्ते। ते च सर्वभाषापर्यालोचनया तत्र प्रकल्पिताः। यथा—

| | |
|---|---|
| Strong vowels. | *e ē o ō a ā* |
| Weak vowels. | *i ī u ū* |
| Neutral vowel. | *ə* |
| Sonant liquids. | *r̥ r̥̄ l̥ l̥̄* |
| Sonant nasals. | *ṅ̥ ṅ̥̄ ñ̥ ñ̥̄ n̥ n̥̄ m̥ m̥̄* |
| Diphthongs. | *ai̯ ei̯ oi̯ au̯ eu̯ ou̯* |
| | *āi̯ ēi̯ ōi̯ āu̯ ēu̯ ōu̯* |
| | *əi̯ əu̯.* |

अच्त्वोपलक्षितानुनासिकेषु मूर्धन्यस्तादृशो न निर्दिष्टः, टवर्गाभावान्मातृभाषायाम् ॥

एवं संस्कृतमातृभाषावस्थिता अचो निरूपिताः । व्यञ्जनानां तावन्निरूपणमुत्तरत्र भविष्यति । वर्णेषु तावद्ये नाम स्वरपद-वाच्यास्तेऽत्र आत्मभूताः, ये तु व्यञ्जनपदवाच्यास्ते शरीरभूताः । व्यञ्जयन्ति प्रकाशयन्ति, आत्मभूतानचोऽवच्छेदकानि सन्ति इत्यन्वर्थमेव तेषां नाम चिरन्तनैर्दत्तम् । अत एव चास्माभिरपि आत्मावच्छेदकस्येव लोके आत्मभूताजवच्छेदकानामेषां शरीर-व्यवहारः कृतः । दृश्यते हि द्राविडभाषायामपि स्वराणां *உயிரெழுத்து* इति, व्यञ्जनानां *மெய்யெழுத்து* इति च व्यवहारः । *மெய் மறந்து* इत्यत्रापि स्थले *மெய்* इत्यस्य शरीरमेवार्थः । विभोरात्मनस्तत्तच्छरीरावच्छेदेन यथा स्फुट-प्रकाशः, तथा व्यञ्जनावच्छेदेनैवाचामपि तादृशानां तथा प्रकाशः । किंच आत्मविहीनं शरीरं यथा नोद्वर्तनादिकमर्हति तथा स्वरवि-हीनं व्यञ्जनमपि नोच्चारणमर्हति । यथाह भगवान्भाष्यकारः— 'नान्तरेणाचं व्यञ्जनस्योच्चारणं भवति' इति । इत्थं वदतो भाष्यकारस्याप्यस्मदुक्त एव स्यादाशयो नान्यः । तत्सिद्धं शरीरात्मनोरिव व्यञ्जनस्वरयोः शरीरशरीरिभाव आत्मात्मवद्भावो वा संबन्ध इति । अत एव Prof. Whitney एवं वदति—

'Consonants are the flesh and bone of speech; vowels are its life.' 'It is on the alternations of sonants and consonants that the articulate character of human speech depends.'

मातृभाषावस्थिताः *a e o ṅ̥ ñ̥ n̥ m̥* वर्णाः संस्कृते *a* इति विपरिणाममुपगच्छन्ति । मातृभाषास्थः अभ्यास *i* वर्णोऽपि

क्वचन संस्कृतभाषायां तथा विपरिणाममुपगच्छति ॥

एवं मातृभाषावस्थिताः *ā ē ō n̥̄ m̥̄ l̥̄ r̥̄* वर्णास्तत्र *ā* इति विकृतिं लभन्ते ॥

*ĭ ŭ r̥̆* वर्णास्तु तादृशास्तत्र स्वरूपेणैवावतिष्ठन्ते ॥

*l̥* कारस्तु क्लृपवर्जं सर्वत्र *r̥* इति भवति । तत्रापि पूर्वं *r̥* कार एव, ततस्तु *l̥* कार इत्यभ्यूहः । तथा च सूत्रं—'कृपो रो लः' इति ॥

दीर्घौ तु *r̥̄ l̥̄* वर्णौ ओष्ठ्यपूर्वकौ हलि परे संस्कृते क्वचन *ūr* इति विपरिणाममुपगच्छतः । ओष्ठ्यातिरिक्तवर्णपूर्वकौ तु तौ *īr* इति । इदं च Brugmann मतेन । एतदनुग्राहिकेयं च त्रिसूत्री—ऋत इद्धातोः, र्वोरुपधाया दीर्घ इकः, उदोष्ठ्यपूर्वस्य इति ॥

Neutral vowel *ə* तावत्संस्कृतभाषायामुत्सर्गतः *i* इति, ओष्ठ्यपूर्वकत्वे ओष्ठ्यपरकत्वे वा *u* इति, semi-vowel परकत्वे Primitive Aryan भाषायां *a* इति, तथैव च संस्कृतेऽपि विपरिणमते ॥

Bechtel पण्डितस्तावत् निःस्वरोऽयं संस्कृते *i* इति विपरिणमते । सस्वरस्तु *a* इति । यथा—

| | | | |
|---|---|---|---|
| Idg. | * *pətér* | Skt. | *pitā (r)* |
| " | * *rə́tnom* | " | *ratnam* |
| " | * *nidhə́nom* | " | *nidhanam* |
| " | * *ksə́trom* | " | *kṣatram.* |

इत्यभिप्रैति । ननूदात्तस्वरस्याक्षरादक्षरान्तरेऽपगमेऽपादानकारकस्य Neutral vowel रूपेण विकारो भवति मातृभाषायामिति तावद्भवतां राद्धान्तः । सत्येवं तादृशस्य Neutral vowel वर्णस्य कथं स्यात्पुनः सस्वरत्वमिति चेन्निःशेषं तथा तस्यानपगमात्तत्त्वं तस्य संभवत्येवेति तदाशयः ॥

Uhlenbeck पण्डितस्तु अस्मिन्विषये निर्दुष्टप्रमाणस्यानुपलम्भादनादरणीयमिदमिति मतमेतन्निराचष्टे. *rətnom* इत्यादिस्थलत्रयेऽपि Neutral vowel स्थाने *e* कारमङ्गीकरोति । स्पष्टं तूत्तरत्र । क्रमेणोदाहरणानि ॥

संस्कृते *a* कारः इण्डोजर्मानिक्भाषीय *a e o* $\underset{\circ}{\acute{n}}$ $\underset{\circ}{\tilde{n}}$ *n̥ m̥* वर्णेभ्य उद्भूतः, कचिच्च अभ्यासस्थ *i* कारात् ।

| | |
|---|---|
| Idg. *a* > Skt. *a* : | * *paltos* > *paṭas* |
| | * *agō* > *ajāmi* |
| | * *akso* > *akṣa*. |
| Idg. *e* > Skt. *a* : | * *esti* > *asti* |
| | * *peṅqe* > *pañca*. |
| Idg. *o* > Skt. *a* : | * *opos* > *apas* |
| | * *oktōu̯* > *aṣṭau*. |
| Idg. $\underset{\circ}{\acute{n}}$ > Skt. *a* : | * *l$\underset{\circ}{\acute{n}}$ghus* > *laghus*. |
| Idg. $\underset{\circ}{\tilde{n}}$ > Skt. *a* : | * *d$\underset{\circ}{\tilde{n}}$keti* > *daśati*. |
| Idg. *n̥* > Skt. *a* : | * *mn̥tos* > *matas* |
| | * *n̥mr̥to* > *amr̥ta* |
| | * *gn̥ṅghō* > *jaṅghā*. |

Idg. *m̥* > Skt. *a* : * *dek̑m̥* > *daśa*
* *k̑m̥tom* > *śatam.*
Idg. *ə* > Skt. *a* : * *ĝhiĝhāmi* > *jahāmi.*

संस्कृते *ā* कारः इण्डोजर्मानिक्भाषीय *ā ē ō l̥̄ r̥̄ n̥̄ m̥̄* वर्णेभ्य उद्भूतः ।

Idg. *ā* > Skt. *ā* : * *pālnis* > *pāṇis*
* *bāghus* > *bāhus.*
Idg. *ē* > Skt. *ā* : * *ĝēni* > *jāni*
* *u̯ēti* > *vāti.*
Idg. *ō* > Skt. *ā* : * *ōk̑us* > *āśu(s).*
Idg. *n̥̄* > Skt. *ā* : * *ĝn̥̄to* > *jāta*
* *mn̥̄nom* > *mānam*
* *i̯n̥̄ter* > *yātar.*
Idg. *m̥̄* > Skt. *ā* : * *perm̥̄* > *parā*
* *egm̥̄t* > *agāt.*
Idg. *l̥̄* > Skt. *ā* } उदाहरणं
" *r̥̄* > " *ā* } यथासंभवमूह्यम्

संस्कृते *i ī u ū* वर्णाः इण्डोजर्मानिक्भाषीय *i ī u ū* वर्णेभ्यो यथाक्रमं निष्पन्नाः । यथा—

Idg. *i* > Skt. *i* : * *ou̯is* > *avis*
* *potis* > *patis.*
Idg. *ī* > Skt. *ī* : * *ĝīu̯os* > *jīvas*
* *u̯īros* > *vīras.*
Idg. *u* > Skt. *u* : * *jugom* > *yugam*
* *k̑ukis* > *śucis.*

Idg. ū > Skt. ū : * dhūmos > dhūmas
* k̂ūros > śūras.

संस्कृत ṛ कारः इण्डोजर्मानिक् ṛ ḷ वर्णाभ्यां जातः ।

Idg. ṛ > Skt. ṛ : * mṛtos > mṛtas
* n̥mṛto > amṛta.
Idg. ḷ > Skt. ṛ : * pḷthus > pṛthus
* u̯ḷqos > vṛkas.

संस्कृते i u a काराः कचित् मातृभाषीय ə वर्णात्संजाताः ।

Idg. ə > Skt. i : * pətḗr > pitā́(r)
* təməros > timiras.
Idg. ə > Skt. u : * u̯ərenos > uraṇas
* pəlu > puru.
Idg. ə > Skt. a : * stəi̯ēm > stayām. Primitive Aryan भाषायां तु staiām.

संस्कृते īr, ūr एतौ मातृभाषीय r̄, l̄ वर्णाभ्यामुद्गतौ ।

Idg. r̄ l̄ > Skt. ūr : * u̯l̄dhu̯os > ūrdhvas
* ml̄dhen > mūrdhan.
Idg. r̄ l̄ > Skt. īr : * dl̄ghos > dīrghas.

मातृभाषीय Diphthong वर्णास्तावत्संस्कृतभाषायां—
e o ai au, ay av āy āv—ए ओ ऐ औ, अय् अव् आय् आव् इत्येवं विपरिणाममुपगच्छन्ति ॥ इदमत्र बोद्धव्यम्—

Diphthongs तावद् द्विधा भवन्ति—

1. Tautosyllabic diphthongs
2. Heterosyllabic diphthongs इति ।

ये तावत् Diphthong वर्णा हल्परका विरामावस्थिता विरामपरका वा भवन्ति ते Tautosyllabic शब्देन व्यवह्रियन्ते। ये तु स्वरपरकास्ते Heterosyllabic शब्देन। तत्र Tautosyllabic वर्णानां संस्कृतभाषायामेकात्मना विपरिणामः। Heterosyllabic वर्णानां तु अपरात्मना। तथाहि—अयमत्र विवेकः॥

| Tautosyllabic | | | Heterosyllabic | | |
|---|---|---|---|---|---|
| Idg. | | Skt. | Idg. | | Skt. |
| *ai̯ ei̯ oi̯* | > | *e* | *ai̯ ei̯ oi̯* | > | *ay* |
| *āi̯ ēi̯ ōi̯* | > | *ai* | *āi̯ ēi̯ ōi̯* | > | *āy* |
| *au̯ eu̯ ou̯* | > | *o* | *au̯ eu̯ ou̯* | > | *av* |
| *āu̯ ēu̯ ōu̯* | > | *au* | *āu̯ ēu̯ ōu̯* | > | *āv* |

| | | |
|---|---|---|
| Tautosyllabic | *ai̯* > *e* : | * *ai̯dhos* > *edhas* |
| | | * *sai̯tus* > *setus.* |
| ” | *ei̯* > *e* : | * *ei̯mi* > *emi* |
| | | * *g̑hei̯men* > *heman.* |
| ” | *oi̯* > *e* : | * *u̯oi̯de* > *veda* |
| | | * *bheroi̯s* > *bhares.* |
| Heterosyllabic | *ai̯* > *ay* : | * *sai̯o* > *saya-tvam.* |
| ” | *ei̯* > *ay* : | * *smei̯etai̯* > *smayate* |
| ” | *oi̯* > *ay* : | * *du̯oi̯o* > *dvaya.* |
| Tautosyllabic | *au̯* > *o* : | * *au̯ges* > *ojas.* |
| ” | *eu̯* > *o* : | * *bheu̯dhetai̯* > *bodhate.* |
| ” | *ou̯* > *o* : | * *sūnou̯s* > *sūnos.* |
| Heterosyllabic | *au̯* > *av* : | * *au̯ō* > *avāmi.* |
| ” | *eu̯* > *av* : | * *k̑leu̯os* > *śravas.* |
| ” | *ou̯* > *av* : | * *ou̯is* > *avis.* |

| | | | |
|---|---|---|---|
| Tautosyllabic | *āi̯ > ai* : | * *suu̯epati̯āi̯ > suvapatyai.* | |
| ,, | *ēi̯ > ai* : | * *e dēi̯ksom > a-daikṣam.* | |
| ,, | *ōi̯ > ai* : | * *eku̯ōi̯s > aśvais.* | |
| Heterosyllabic | *āi̯ > āy* : | * *sāi̯om > sāyam.* | |
| ,, | *ēi̯ > āy* : | * *u̯ēi̯us > vāyus.* | |
| ,, | *ōi̯ > āy* : | * *pōi̯u > pāyu.* | |
| Tautosyllabic | *āu̯ > au* : | * *nāu̯s > naus.* | |
| ,, | *ēu̯ > au* : | * *di̯ēu̯s > dyaus.* | |
| ,, | *ōu̯ > au* : | * *gōu̯s > gaus.* | |
| Heterosyllabic | *āu̯ > āv* : | * *dāu̯o > dāva.* | |
| ,, | *ēu > āv* : | * *dhēu̯eti > dhāvati.* | |
| ,, | *ōu̯ > āv* : | * *dōu̯ene > dāvane* | |
| | | * *gōu̯es > gāvas.* | |

अत्र यद्यत्प्रकृतिकत्वेन निर्दिष्टं तत्तथैव । भाषान्तरेषु तथा दृष्टेः । *əi̯*, *əu̯* वर्णौ तावत् Pr. Aryan भाषायां *ai̯*, *au̯* इति क्रमाद्विपरिणेमाते । तौ च यदि Tautosyllabic, तदा संस्कृत-भाषायां *e o* इति विकृतिमुपलभेते । यदि तु Heterosyllabic तदा तत्र *ay av* इति । यथा—

| Idg. | Pr. Aryan. | Skt. |
|---|---|---|
| * *stəi̯má* | *stai̯má* | *sthemá* |
| * *stəi̯ém* | *stai̯ám* | *stayām* इति । शिष्टमूह्यम् ॥ |

स्थिते चैवं मातृभाषावस्थित *e* कार *o* कारयोः, तथा संस्कृतभाषास्थ *e* कार *o* कारयोश्च न कंचिदपि संबन्धमुपलभामहे । मातृभाषास्थ *e* कार *o* कारौ तावत्संस्कृतभाषायां *a* इत्येतं विकृतिं प्राप्नुतः । Tautosyllabic *ai̯ ei̯ oi̯ au̯ eu̯ ou̯*

वर्णास्तु यथायोगं पूर्वोक्तनयेन संस्कृते *e o* इत्येवं विपरिणाम-मुपगच्छन्ति । एवं Diphthong वर्णप्रकृतिकत्वादेव ते एज्वर्णाः सन्ध्यक्षराणीति विमर्शकारा मन्यन्ते । अन्यच्च । भाषासु लक्ष्य-माणेषु अज्वर्णेषु मध्ये एच एवानादिसिद्धाः । अ इ उ वर्णास्तु तेषां विकृतय एवेति तेऽभिप्रयन्ति । पाणिनीयास्तु *a i u* वर्णा एवानादिसिद्धाः, तेषां परस्परमेलनेनैव यथायोगं एचो निष्पद्यन्ते, अत एव ते सन्ध्यक्षराणीति । नेदं क्षोदक्षमम् । संस्कृतभाषायाः केवलं पर्यालोचने तेषामुक्तेः समीचीनत्वेऽपि सर्वेतरभाषापर्यालोचनेऽसाङ्गत्यात् । तथाहि । संस्कृते तावद्येषु पदेषु अकारः श्रूयते तेष्वेव तत्समकालमवर्णस्य स्थान इतर-भाषासु क्वचिदकारः क्वचिदेकारः क्वचिदोकारश्च लक्ष्यते । तानि च पदानि एकस्या एव प्रकृतेर्निष्पन्नानि । यथा—

| Idg. | Skt. | Latin |
|---|---|---|
| * *qe* | *ca* | *que* |
| * *qoteros* | *kataras* | *quoteros* |
| * *ágō* | *ajāmi* | *ágō* |

इति । अतो विज्ञायते मातृभाषावस्थितानामकार-एकार-ओकाराणां त्रयाणामपि संस्कृतभाषायामकारात्मनैव विपरि-णामः, इतरत्र तु यथासंभवं स्वरूपेणैवावस्थितिरिति । इदमेव च कारणं संस्कृतभाषास्थ *a* वर्णस्य प्रकृतित्वेन तेषां मातृभाषाया-मङ्गीकारे । अन्यच्च । न केवलं मातृभाषावस्थितस्य एकारस्य संस्कृते अकारात्मना विपरिणामः। यावदिकारात्मनापि क्वचनांशेन विपरिणामो भवति । यथा— Idg. * *temiros* > Skt.

*timirás* इति । एवमोकारस्याप्यंशेन क्वचन उ इति विपरिणामो भवति । तथाच सूत्रम् 'एच इग्घ्रस्वादेशे' इति । अत्रेदं तत्त्वम् । एक्षु तावत्प्रतिवर्णमंशद्वयमस्ति । तथाहि—सर्वत्र तत्राद्योंऽशोऽवर्णसदृशः । उत्तरांशस्तु यथायोगमिवर्णोवर्णसदृशः । तत्र हि एकारैकारयोरुत्तरभाग इवर्णसदृशः । ओकारौकारयोस्तु स भाग उवर्णसदृशः । इयञ्च 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' इत्येवं सूत्रयता पाणिनिनाभ्युपगतमेव । 'एच इग्घ्रस्वादेशे' इति पाणिनीयसूत्रं व्याकुर्वता श्रीमता वासुदेवदीक्षितेनापि बालमनोरमायां विषयोऽयं सुष्ठु प्रतिपादितः । तत्सिद्धं अ-इ-उ-वर्णा यथायोगं एकार-ओकारयोर्विकृतय इति । सिद्धे चैवं *a i u* वर्णा एवानादिसिद्धाः तेषां विकृतय एव एज्वर्णा इत्यादिपाणिनीयोक्तिरसंगतेव प्रतिभाति । न च दृश्यते लोके विकृतेः प्रकृतिरुत्पन्ना । एतेन 'इको गुणवृद्धी' इत्येवं यदिकः पाणिनिना एच्प्रकृतित्वमुक्तं तदपि प्रत्युक्तम् । इत्यल विस्तरेण ॥

न केवलं संस्कृतभाषावस्थितयोरेकारौकारयोः Diphthongs वर्णाः प्रकृतयः, यावदन्येऽपि *es ep* प्रभृतयो व्यवतिष्ठन्ते । तथाहि । संस्कृतभाषायां तावत *as* इति कश्चन धातुर्लक्ष्यते । तस्य च मातृभाषायां *es* इति प्रकृतिः । तया सह *dhi* इति लोण्मध्यमपुरुषैकवचनप्रत्ययस्य योजने *es+dhi* इति भवति । ततश्च कालक्रमेण *ez+dhi* इति भवति । अतः Pr. Aryan भाषायां *ez+dhi* इति भवति । संस्कृतादव्यवहितपूर्ववर्तिन्या भाषायाः Primitive Aryan इति नाम । अथ

च संस्कृतभाषायां सः *edhi* इति भवति। Pr. Aryan *az* वर्णस्य दन्त्यपरकत्वे संस्कृतभाषायां *e* इति विपरिणामाभ्युपगमात्। तथा च *edhi* इत्यत्र विद्यमानस्य *e* कारस्य मातृभाषायां *es* इति, Pr. Aryan भाषायां *az* इति च प्रकृतिः॥

*sedus* इत्यत्राप्येवमेव। तथाहि। संस्कृतभाषावस्थित *sad* धातोः मातृभाषायां *sed* इति प्रकृतिः। सा च द्वित्वेन लिटि *sed-sed* इति भवति। ततः प्रथमखण्डे *d* कारस्योत्तरखण्डे *e* कारस्य च लोपेन *sesd* इति भवति। तत ऊर्ध्वं तु *sezd* इति। अतश्च Pr. Aryan भाषायां *sazd* इति। अतः संस्कृते *sed* इति। पश्चाच्च *us* प्रत्यययोगे *sedus* इति। अत्रत्यस्य *e* कारस्यापि पूर्ववदेव प्रकृतिः॥

एवं संस्कृते लक्ष्यमाणस्य *pat* धातोः मातृभाषायां *pet* इति प्रकृतिः। सा च पूर्ववत् द्वित्वेन लिटि *pet-pet* इति भवति। अतश्च पूर्वखण्डे विद्यमानस्य *t* कारस्योत्तरखण्डे विद्यमानस्य *e* कारस्य च लोपे *pept* इति भवति। Pr. Aryan भाषायां तु सः *papt* इति। संस्कृतभाषायां तु *pet* इति। Pr. Aryan भाषावस्थित *ap* वर्णस्यापि *az* वर्णस्येव दन्त्यपरकत्वे संस्कृतभाषायां *e* इति विपरिणामाभ्युपगमात्। ततः *us* प्रत्ययोगे *petus* इति तत्र सिध्यति। अत्र विद्यमानस्य तु *e* कारस्य मातृभाषायां *ep* इति, Pr. Aryan भाषायां *ap* इति च प्रकृतिः। एवमन्या अप्यस्य प्रकृतयः सुधीभिरुन्नेयाः॥

रमेश इत्यादौ विद्यमानः *e* वर्णः सन्धिप्रयुक्तः। रामो गच्छति इत्यादिषु विद्यमाना ओकारादयोऽप्येवमेव ॥

अथ कथं *avocat, soḍhum, voḍhum* इत्यादौ ओकारः? उच्यते। वच् धातोः लुङि तस्य तिपि धातोरडागमे अङि च *a+vac+a+t* इति स्यात्। मातृभाषायां त्वस्य *e+uek+e+t* इति प्रकृतिः। अङः परत्र विद्यमानत्वेऽपि चङः सादृश्येन धातोस्तत्र द्वित्वं भवति। येन तत्र *e+uek+uek+e+t* इति स्यात्। ततश्च पूर्वखण्डे कण्ठ्यस्योत्तरखण्डे *e* वर्णस्य च लोपे *e ueuk-e-t* इति स्यात्। अथ च संस्कृतभाषायां *avocat* इति रूपं भवति। एतदेव च 'वच उम्' इत्येवमासूत्रयता पाणिनिना प्रतिपाद्यते। एवं *ve-uegh+tum* इति स्थिते, पूर्ववत् *e* वर्णस्य लोपे संस्कृतभाषायां *voḍhum* इति भवति। केचित्तु अत्रोभयत्रापि उत्तरखण्डे विद्यमानस्य *ue* वर्णस्य इण्डोजर्मानिक्भाषायामेव *u* इति विपरिणामे, ततः पूर्वखण्डे विद्यमानस्य *e* वर्णस्य संस्कृते *a* वर्णात्मना, *u* वर्णस्य स्वाभाविकत्वेन च विपरिणामे सन्धिना *o* कारे तथा रूपसिद्धिरित्यभिप्रयन्ति। *avocat* इत्यत्र इदमेव मतं न्याय्यः। *voḍhum* इत्यत्र तु पूर्वमतमेव। एतत्सादृश्येन च *soḍhum* इति। एतदर्थमेव पाणिनिनापि 'सहिवहोरोदवर्णस्य' इत्येवमासूत्रितं स्यात्। नन्वेवमादिस्थलेषु *a* वर्ण *i* वर्णयोस्तथा *a* वर्ण *u* वर्णयोश्च मेलनेन *e* कार *o* कारयोर्निष्पत्त्यङ्गीकारे स्वोक्तिविरोधः स्यात्। न। स्वोक्तेः शाब्दिकविमर्शानुसारं पारमार्थिकविषयप्रतिपादकत्वात् ॥

## Sonant nasals or Syllabic nasals or Vocalic nasals.

Syllable नाम एकाच्समुदायः. Nasal वर्णानां स्वातन्त्र्येण Syllable रूपेणाप्यवस्थातुं शक्यत्वेनेत्थं नाम कृतम् । इमे च द्विधा भवन्ति ह्रस्वदीर्घभेदेन (Short and Long sonant nasals). तत्राद्यानां संस्कृतभाषायां *a* कारात्मना विपरिणाम इति तावत्प्रागेवाभिहितमुदाहृतं च । उदाहरणान्तरं यथा— Idg. * *sm̥mos* >Skt. *samas.* *m̥* वर्णोऽत्र glide वर्णः । अथ कोऽयं glide वर्णो नाम । उच्यते—अज्द्वयस्य व्यञ्जनद्वयस्य वोच्चारणकाले यस्तावद्विजातीयो ध्वनिर्मध्ये श्रूयते स एवायम् । तद्यथा प्राकृतेऽपि—*ho+i> ho (y) i ; du+o> du (v) o* इति ॥

एषामङ्गीकारे हेतुः—

Skt. *matas*, Lat. *mentus*, Goth. *munds*, Gk. *mnas.* इमानि चैकस्या एव प्रकृतेर्निष्पन्नानि पदानि । तत्र *m t* वर्णयोर्मध्ये क्वचिदकारो लक्ष्यते, क्वचिच्च *en* इति, क्वचन *un* इति, कुत्रापि *na* इति । कैतेषां मातृभाषायां प्रकृतिरिति चेत् विलक्षणोऽयं *n̥* वर्णः । न तावदत्र संस्कृतभाषानुरोधेन *a* कार *e* कार *o* कारेष्वन्यतमस्तथा तत्र कल्पयितुं शक्यः । भाषान्तरेषु अननुगमापत्तेः । इतरभाषानुरोधेन केवल *n* कारस्य *en* आदीनां वा तत्र तथा कल्पनेऽप्येवमेव । अतोऽच्त्वोपलक्षितो विलक्षण एव कश्चिद्वर्णो *n̥* इत्येवं तथा तत्राङ्गीकार्यः । स च संस्कृत-

भाषायां *a* इति विपरिणाममुपगच्छति । इतरत्र तु यथायोगमंशद्वयोपलक्षितत्वेन *en, un, na* इति. *ṇ̥* प्रभृतीनामन्येषां तथा तत्राङ्गीकारेऽप्येतादृश्येवोपपत्तिः । अनुस्वारमट्स्वन्तर्भावयतां महाभाष्यकृतामच्त्वोपलक्षितत्वं तस्य किं नाभिप्रेतम् ? विमृश्यतां तावदत्र अट्कुप्वाङ्-हयवरट्सूत्रयोर्भाष्यम् ॥

## Long Sonant Nasals.

यत्र तावदेते Long sonant nasal वर्णा अङ्गीक्रियन्ते तत्र *ā* or *ē* वर्णाभ्युपगमेनैव कार्यसिद्धिर्भवतीत्येवं मन्यमानः Uhlenbeck पण्डितो नैतानङ्गीकरोति पार्थक्येन मातृभाषायाम् । Brugmann पण्डितस्तु * *égm̥̄t* > *ágāt*, **i̯n̥̄tér* > *yāta(r)* इत्येवमादीनां पदानामानुगुण्यसंपिपादयिषयाऽवश्याभ्युपेयतामाभिप्रैति । प्रायः संस्कृतभाषायां यत्र *an* > *ā* इति भवति तत्र मातृभाषायां Long sonant nasal विद्यते । यथा—

| | | | | |
|---|---|---|---|---|
| Strong | * ... *men* | > | Skt. | *mahiman* |
| Weak | * ... *mn̥̄* | > | " | *mahimā* |
| | * *musn̥̄na* | > | " | *muṣāṇa* |
| | * *ǵn̥̄to* | > | " | *jāta* |
| | * *ǵn̥̄námi* | > | " | *jānámi*. |

*jāta, jānāmi* इत्यनयोः क्रमेण संस्कृते *jan, jñā* इति धातू । तयोश्च मातृभाषायां √ *ǵen* इति प्रकृतिः । सा च संस्कृतभाषायां स्वत एव *jan* इति भवति. *jñā* इति तु *ǵen, ǵn̥̄, jn̥̄* ततः *jā* इति क्रमेण निष्पद्यते ॥

एवं *jūspati* इति वेदे किंचन पदं लक्ष्यते । तस्य चायमर्थः—बालानां रक्षिता इति । अत्र *pati* वर्जितस्य *jūs* इत्यस्य मातृभाषायां **ĝn̥s* इति प्रकृतिः । तत्रापि *s* वर्जितस्य *jū* इत्यस्य संस्कृते *jan* इति प्रकृतिः । तस्याश्च मातृभाषायां *ĝen* इति ॥

एवं Sonant nasal सद्भावे निश्चिते क्तप्रत्ययवर्जमुत्तरत्र विद्यमानवर्गनिरीक्षणेनैव कीदृशेनात्र Sonant nasal वर्णेन भवितव्यमिति झगिति वक्तुं शक्यते । क्तप्रत्ययस्थले तु यदन्तो धातुः स तादृशस्तत्र निवेशनीयः ॥

इमे च Sonant nasal वर्णाः संस्कृतभाषायां हल्परका हल्पूर्वका वा अचो भवन्ति । यथा—Idg. ** mud + n̥s =* Skt. *mudas*. Idg. **nōmn̥ + bhyām = nāmabhyām*. एवमच्पूर्वका अच्परका वा हलः । यथा—Idg. **ul̥qo + n̥s =* Skt. *vr̥kān ; * nōmn̥ + ā = nāmnā* । अन्यदूह्यम् ॥

## Sonant Liquids.

ऋऌवर्णौ रलौ च मातृभाषायां Pr. Aryan भाषायां च स्वरूपेण व्यवतिष्ठन्ते । ततो भाषान्तरसंक्रमणे क्वचिद्विकृताः क्वचिच्चाविकृता भवन्ति । तथा हि । ऋग्वेदे दशमं मण्डलं ब्राह्मणानि च विहाय सर्वत्र ऌलौ ऋरौ भवतः । यथा—अलंकृता इति वक्तव्ये अरंकृता इति । केचित्तु—मातृभाषासमकालमेव काचनापभ्रंशभाषाऽऽसीत् । तत्साजात्येनात्र रेफ इति वदन्ति । ऋरौ तु स्वरूपेणैवावतिष्ठेते । मागध्यां पुनः ऋरौ ऌलौ भवतः । प्राकृतभाषाया

उपलक्षणमिदम् । संस्कृतभाषायां *l* वर्णः क्वचन रेफो भवति. *l* वर्णस्तु सर्वत्र *ṛ* इति भवति । एवं यो भवति विपरिणामः तस्य Rhotacism इति संज्ञा । एषामङ्गीकारे हेतुः—

| Idg. | Skt | Aves | Gk | Gothic |
| --- | --- | --- | --- | --- |
| * *potēr* | *pitṛ* | *ptre* | *pater* | *fadar.* |

अत्र क्वचन *l* कारोत्तरं *ṛ* लक्ष्यते, क्वचित् *er*, क्वचिच्च *re*, क्वचित्तु *ar*. एषामानुगुण्यसंपादनार्थं मतशब्दोक्तन्यायेनाक्त्वोपलक्षितो विलक्षणः कश्चन वर्णः *ṛ* इत्येवं मातृभाषायामवश्यमङ्गीकार्यः ॥

हेत्वन्तरं यथा—Lithuanian भाषायां *krinto* इति किंचन पदं [illegible], संस्कृते च तत्समानार्थकं *kṛntāmi* इति पदम् । ते [illegible] एव प्रकृतेर्निष्पन्ने । सा च मातृभाषायां * *qṛto* इत्येवंरूपा । ननु *krinto, kṛntāmi* इत्युभयत्रापि infix भूतं *n* कारं, [illegible] भूतं *o* कारं *āmi* च वर्जयित्वा शिष्टस्य *qreto* इति प्रकृतिः । न । संस्कृते तस्याः *krato* इति विपरिणामापत्तेः । नापि *qarto*, तस्याः Lithuanian भाषायां *kirto* इति संस्कृते *karto* इति च विपरिणामापत्तेः । अतः पूर्वोक्तन्याये‌न *qṛto* एव प्रकृतिः । तत्र विद्यमानः *ṛ* वर्णः संस्कृते तथैव, Lithuani[illegible] [illegible] च विपरिणमते. Lith. *dr*[illegible] [illegible] इत्यादिष्वप्ययमेव न्यायोऽनुसरणीयः । तयोः *dhr* इति प्रकृतिः. [illegible] Lithuanian भाषायां अतः पूर्वं निदर्शितं [illegible] ।

अन्यच्च—अच्परकाविमौ sonant liquid वर्णौ, संस्कृतभाषायां हलौ भवतः । यथा— *pitrā, pitaram, gamlā, gamalam.* हल्परकौ तु अचौ । यथा *pitṛbhyām, pitṛbhis, gamḷbhyām, gamḷbhis.*

एवं स्थिते संस्कृत-ऌ-वर्णः मातृभाषीय-ऌ-वर्णात्परिणत इति न भ्रमितव्यम् क्लृपूर्वजं मातृभाषीय-ऌकारस्य संस्कृते ऋकारात्मनैव विपरिणामात् । क्लृप्त्वादिस्थले तु ऌकारः प्राकृतसाजात्येन ॥

## Neutral Vowel.

Neutral vowel तावदर्धमात्रिकोऽविशेषः । स च किंरूप इत्यादि न विशिष्य ज्ञातुं शक्यते । आवश्यकश्चास्य मातृभाषायामङ्गीकारः । तथाहि । संस्कृते तावत् *a, ā* इत्येवमादयो यथाक्रममेकद्विमात्रा अच उपलभ्यन्ते । तत्र *ā* इत्यस्य न्यूनीभावे *a* इति भवति. *a* इत्यस्य न्यूनीभावे किं भवतीति न शक्यते निश्चेतुम् । ततोऽप्यवरस्यार्धमात्रिकस्याजन्तरस्य तत्राभावात् ॥

भाषान्तरपर्यालोचनेनापि तादृशः कश्चन वर्णो मातृभाषायामासीदित्येवाभ्युपगन्तव्यम् । तथाहि—संस्कृते लक्ष्यमाणस्य *kṛṣṇa* इति पदस्य पर्यायतया द्रविडभाषायां *kiruṣṇa* इति पदं लक्ष्यते । ते च एकस्या एव प्रकृतेर्निष्पन्ने । तत्र क्वचित् *k* कारोत्तरं *ṛ* इत्येव लक्ष्यते । क्वचित्तु तत्स्थाने *iru* इति । अत एवं वक्तव्यं भवति । मातृभाषायामुभयोरपि *ṛ* इत्येवं विलक्षणः कश्चन वर्णः प्रकृतिः । स च *ṛ* वर्णः स्वरूपेणैव संस्कृते व्यवतिष्ठते, द्रविडभाषायां तु

मातृभाषावस्थितः Neutral vowel वर्णः liquid वर्णयोरन्यतरेणोपलक्षितः संस्कृतभाषायां *ir*, *īr*, *ur*, *ūr* इति भवति । अत्रेदमवधेयम् । यदा वा liquid वर्णयोरन्यतरेणोपलक्षितस्यास्य वर्णस्य पूर्वत्रोत्तरत्र वा ओष्ठ्यवर्णा व्यवतिष्ठन्ते तदा संस्कृते *ur*, *ūr* इति भवति । यदा तु तद्व्यतिरिक्ता वर्णास्तदा *ir*, *īr* इति ॥

नियमस्यास्य बाधोऽपि क्वचन लक्ष्यते । यथा—

| | | | | |
|---|---|---|---|---|
| * *ĝəreti* | Skt. | *gurati* (Ved.) | *girati* | (Regular form) |
| * *ərmos* | ,, | *īrmas* | ,, *ūrmas* | ,, |

तत्राप्यस्ति विशेषः । यदा तादृशस्य वर्णस्य अचः परत्रावतिष्ठन्ते तदा यथायोगं *ir ur* इति । यदा तु हलस्तदा *īr*, *ūr* इति । इदं च Uhlenbeck मतमवलम्ब्योक्तम् । न ह्ययं Long sonant liquid वर्णानङ्गीकरोति । उदाहरणानि यथा—

| | | | |
|---|---|---|---|
| Idg. | * *u̯ərenos* | Skt. | *uraṇas* |
| | * *u̯ərdhu̯os* | ,, | *ūrdhvas* |
| | * *u̯ərnos* | ,, | *ūrṇas* |
| | * *ĝəles* | ,, | *giras* |
| | * *dəlghos* | ,, | *dīrghas* |
| | * *k̂ərso* | ,, | *śīrṣa*. |

Brugmann पण्डितस्तु *īr*, *ūr* स्थले सर्वत्र *ər*, *əl* स्थाने Long sonant liquid वर्णानङ्गीकरोति ॥ यथा—

| | | | |
|---|---|---|---|
| Idg. | * *u̯l̥̄dhu̯os* | Skt. | *ūrdhvas* |
| | * *u̯l̥̄mis* | ,, | *ūrmis*. |
| | * *dl̥̄ghos* | ,, | *dīrghas* |
| | * *k̂l̥̄so* | ,, | *śīrṣa*. |

अयमत्र विवेकः. *ər* or *əl*+consonant दीर्घस्य निमित्तं Uhlenbeck मते. Brugmann मते तु *r̥̄*, *l̥̄*+consonant. लाघवादत्र Uhlenbeck मतमेव श्रेयः ॥



तत्सिद्धं संस्कृतभाषावस्थितानां स्वराणां यथायोगं मातृभाषायामेताः प्रकृतय इति । यथा—

| Skt. | | Idg. |
|---|---|---|
| *a* | < | *a e o ṅ̥ ñ̥ n̥ m̥*, Semi-vowel परकः *ə*, अभ्यासस्थः *i* च । एवं मातृभाषावस्थितानां बहूनां वर्णानां संस्कृते अकारात्मना विपरिणामादेव तत्र *a* वर्णस्य वर्णान्तरापेक्षया व्यापकत्वम् । अत एव गीताचार्योऽप्याह—'अक्षराणामकारोऽस्मि' इति । |
| *ā* | < | *ā ē ō ṅ̥̄ ñ̥̄ n̥̄ m̥̄.* |
| *i* | < | *i*; पूर्वत्रोत्तरत्र वा ओष्ठ्यातिरिक्तवर्णोपलक्षितः अच्परक-र्-ल्-परको Neutral vowel च । |
| *ī* | < | *ī*; पूर्वत्रोत्तरत्र वा ओष्ठ्यातिरिक्तवर्णोपलक्षितः हल्परक-र्-ल्-परको Neutral Vowel च । Brugmann मतेन तु तादृश Long sonant liquid ॠ-ॡ-वर्णयोरन्यतरोऽपि । |

Skt. Idg.

*u* < *u*; पूर्वत्रोत्तरत्र वा ओष्ठ्योपलक्षितः अच्परक liquid परकः Neutral vowel च ।

*ū* < *ū*; पूर्वत्रोत्तरत्र वा ओष्ठ्योपलक्षितो हल्परक liquid परकः Neutral vowel च । Brugmann मतेन तादृश long sonant liquid (ॠ ॡ) वर्णयोरन्यतरोऽपि ।

*r̥* < *r̥*, *l̥*.

*r̥̄* < *r̥̄*, *l̥̄* Brugmann मतेन. Uhlenbeck मतेन तु प्राकृतसादृश्येन !

*l̥* पुनः प्राकृतसंबन्धात्तत्सादृश्येन वा ।

*e* < Tautosyllabic *ai̯ ei̯ oi̯* & *es ep ej*, *ā* + *í*

*o* < " *au̯ eu̯ ou*, *ă* + *ú*

*ai* < " *āi ēi̯ ōi̯*

*au* < " *āu ēu̯ ōu̯*.

---

## ABLAUT.

## ॥ अज्विपरिणामः ॥

क्रैस्तवीय एकोनविंशशतके भाषाविमर्शकधौरेयाः केचन पाश्चात्या भारतवर्षभारतीः सुतरां परिशीलयामासुः। तदा संस्कृते एकस्मिन्नेव इण्धातौ—एकत्र एति, अन्यत्र इतः, अपरत्र यन्ति इत्येवं, तथा पित्रादिशब्देषु—एकत्र पिता, अन्यत्र पितरः, अपरत्र पितुः, इतरत्र पितृ इत्येवं परस्परं विपर्यस्तानि रूपाणि निरीक्ष्य विपर्यासस्य तादृशः केनचिद्धेतुना भवितव्यमिति मन्यमाना वक्ष्यमाणनयेनोपपादयितुमुपचक्रमिरे ॥

अज्वर्णेषु तावत् ध्वनिनियमैरप्रसञ्जिता अपि विपरिणामा भवन्ति। ये किल Vowel-gradation इति व्यपदिश्येरन्। तत्र ये Pr. Idg. काल एव प्रसक्ताः तेषां 'Ablaut' इति संज्ञा। तच्चाङ्गल्यामेवं लक्ष्येत—

"By Ablaut or vowel-gradation, we understand such accentual, quantitative and qualitative differences of the sonantal element of a root- or suffix-syllable, as were not called forth by sound-laws which were in operation at the time of the individual development of the Indo-germanic languages, but had their origin either directly or indirectly in primitive Indo-Germanic differences."

(Vide Brugmann's Comp. Grammar Vol. 1. ¶ 307).

Ablaut नाम इण्डोजर्मानिक्वंशीयभाषाणां तत्तद्भाषात्वेन पृथक् पृथगवस्थानात्पूर्वं मातृभाषावस्थितैरेव ध्वनिभेदकोपाधिभिः प्रसञ्जिताः प्रकृतिप्रत्ययघटकाक्षसमुदाये प्रवृत्ताः स्वर-संख्या-स्थान-प्रयुक्ता विपरिणामा इति ॥

ते च विपरिणामाश्चतुर्धा भवन्ति—

1. Accentual Variations स्वरसंबन्धिनो विपरिणामाः ।
2. Quantitative Variations मात्रासंबन्धिनो विपरिणामाः ।
3. Qualitative Variations स्थानसंबन्धिनो विपरिणामाः ।
4. Quantitative-Qualitative Variations द्वितीयतृतीयोभयसंबन्धिनो विपरिणामाः ॥

क्रमेणोदाहरणानि—

1. Idg. * *péqeti : peqtó* > Skt. *pácati : paktá (vá)*
2. Idg. * *éiti : itós* > Skt. *éti : itás*
3. Greek *phéros : phorós*
4. Idg. * √*stā́ : stató* > Skt √*sthā́ : sthitá.*

अत्र सर्वत्र स्वरस्यापि विपरिणामोऽस्ति । तत्प्रयुक्ताश्च तत्तद्विपरिणामा इति Ablaut भेदस्य इमान्युदाहरणानि ॥

Idg. * *terums* > Skt. *tarun(s)*. अत्र मातृभाषायां विपरिणामं विना संस्कृते केवलं तस्य लक्ष्यमाणत्वात्स्वरविपरिणामाप्रयुक्तत्वाच्च नेदं Ablaut भेदस्योदाहरणं, पारिशेष्यात् Vowel gradation भेदस्यैव. Compensation नियमेन तु तत्स्थाने दीर्घः ॥

Idg. * *ekṷó+es* > Skt. *aśvā́s* अत्रापि पूर्ववत्संस्कृते केवलं विपरिणामस्य दर्शनात् Vowel-gradation भेदस्यैवेदमुदाहरणम् । अत्र *es* स्थाने *os* इति निवेश्य, सवर्णदीर्घेण *ō* कारे कृतेऽपि स्वरविपरिणामप्रयुक्तत्वाभावात्तस्य नेदं Ablaut भेदस्योदाहरणम्, किंत्वन्यस्यैव ॥

अज्विपरिणामे षट् सङ्घा वर्तन्ते शाब्दिकैः क्रोडीकृताः—

| No. | Series | Strong grade No 1 | Strong grade No. 2 | Long grade No 1 | Long grade No 2 | Weak grade No 1 | Weak grade No. 2 | Weak grade No 3 |
|---|---|---|---|---|---|---|---|---|
| 1. | *e* | *é* | *o* | *ḗ* | *ō* | *ə* | | |
| 2. | *o* | *ó* | *o* | *ṓ* | *ō* | *ə* | | |
| 3. | *a* | *á* | *o* | *ā́* | *ō* | *ə* | | |
| 4. | *ē* | *ḗ* | *ō* | | | *e* | *ə* | |
| 5. | *ō* | *ṓ* | *ō* | | | *o* | *ə* | |
| 6. | *ā* | *ā́* | *ō* | | | *a* | *ə* | |

अयं च विभागः Brugmann मतानुसारेण. Uhlenbeck तु द्वितीयतृतीयभेदावपहाय चतुर एव भेदानङ्गीकरोति । तन्मते तत्रापि *ō* *ā* भेदाङ्गीकारेणैवोपपत्तिः । तयोः Weak grade एतावितिं तदभिप्रायः । अत्राद्यत्रितयस्य Wg. 1 स्थले शिष्टत्रितयस्य Wg. 2 स्थले च येन केनचिदचा तत्त्वोपलक्षितवर्णान्तरेण वा भवितव्यमित्येव नियमः । केषांचित्प्रत्ययविशेषाणां प्रकृतिविशेषेण योगे प्रतिस्थलं रूपाणि विभिन्नानि भवन्ति । यथा पित्रादिशब्देषु । तादृशविपर्यासपर्यालोचनेनेदमित्थं प्रकल्पितम् ॥

एषु *e* series भेदस्य केवलं सर्वेषामपि विपरिणामाना-मुदाहरणानि लक्ष्यन्ते । द्वितीयतृतीययोस्तत्तद्भाषासु यथासंभवं कानिचिदेवोदाहरणान्युपलभ्यन्ते । इतराणि प्रकल्प्यानि । तुरीयपञ्चमषष्ठानां तु लभ्यानि बहूनि, कानिचिदेव कल्पनीयानि । किमित्यभावे तानि तत्र कल्प्यन्त इति चेत्सर्वत्रापि तुल्यरूपतासंपिपादयिषयेत्युक्तमेव प्राक् ॥

संस्कृते तु *a* series, *ā* series इति series द्वयमेव । मातृभाषास्थितस्य प्राथमिकस्य series त्रयस्यात्र *a* इति, द्वितीयस्य *ā* इति च विपरिणामात् ॥

| | sg.1 | sg.2 | lg.1 | lg.2 | wg.1 | wg.2 | wg.3. |
|---|---|---|---|---|---|---|---|
| 1. *a* | *á* | *a* | *ā́* | *ā* | *ə* | | |
| 2. *ā* | *ā́* | *ā* | | | *a* | *ə* | |

अत्रापि wg. 1, 2 स्थलयोर्यथायोगं पूर्ववदेव नियमः ॥

क्रमेणोदाहरणानि—

| | | | | | | |
|---|---|---|---|---|---|---|
| I *e* | sg. 1 | Idg. | * *patér* | Skt. | *pitaram* |
| | sg. 2 | " | * *-tor* | " | *svasāram* |
| | lg. 1 | " | * *petḗr* | " | *pitā́* |
| | lg. 2 | " | * *-tōr* | " | *dātā* |
| | wg. 1 | " | * *tr̥* | " | *pitr̥ṣu* |
| | wg. 2 | " | * *pətr* | " | *pitrā.* |

समासेऽस्मिन्नत्र समासादृश्येन *a* वर्णस्य दीर्घः. Greek, English भाषयोः क्रमेणास्य [illegible], *sistor* इति स्पष्टम् ।

| | | | | | | |
|---|---|---|---|---|---|---|
| *e* | | sg. 1 | lg. 1 | wg. 2 | | |
| | * | *péd* | *pḗdam* | | | |
| | Skt. | *pád* | *pā́dam* | *upabde.* | | |
| *o* | | sg. 1 | wg. 1 | | | |
| | * | *protii̯óqso* | *protiəq* | | | |
| | Skt. | *pratyákṣa* | *pratīka.* | | | |
| *a* | | sg. 1 | sg. 2 | lg. 1 | wg. 2 | |
| | * | *áĝō* | *oĝós* | *ā́ĝis* | *pariĝmén* | |
| | Skt. | *ájāmi* | *ajás* | *ā́jis* | *parijmán.* | |
| *ē* | | sg. 1 | sg. 2 | wg. 2 | wg. 3 | |
| | * | *dhḗmen* | *dhō* | *dhətó* | *dedhmos* | *dhettó* |
| | Skt. | *dhā́man* | *dōms* (Goth.) | *hitá* | ¶ *dadhmas* | †*dhatta* |
| *ō* | | sg. 1 | sg. 2 | wg. 1 | wg. 2 | wg. 3 |
| | * | *dṓnam* | *dédō* | *dotus* | *édəto* | *dottós* |
| | Skt. | *dā́nam* | *dádāmi* | *datus* (Lat.) | *ádita* | ‡ *dattás* |
| *ā* | * | *stā́na* | *téstōu̯* | *tistati* | *stətó* | *téstus* |
| | Skt. | *sthā́na* | *tásthau* | *tiṣṭhati* | *sthitá* | *tásthus* |

अत्र सर्वत्रापि wg. 1, 2 भेदौ यथायोगं qualitative स्योदाहरणं भवत इति केचित् ॥

---

¶ *dhá + mas > dhā́-dhā́-mas > dā́-dh-mas > dadhmás.*
† *dhá + ta > dhā́-dhā́-ta > dha-dh-tá > dha-d-tá > dhattá.*
‡ *dá + tas > dā́-dā́-tas > dad-tás > dattás.*

ननु चिनोमीत्यादौ तत्तद्विभक्तीनां विद्यमानत्वेनैवार्थविशेषादीनामवगतिर्भवति, नतु Ablaut विपरिणामेनेति चेन्मैवम् । मूर्धा हे मूर्धन् इत्यादिषु बहुषु स्थलेष्वेतेनैव तत्तद्विशेषाणामवगतिदर्शनात् । *man*, *men* इत्यादि भाषान्तरेष्वप्ययं तथा लक्ष्यते । अतो लाघवात्प्रत्ययस्थलेष्वपि अनेनैव तत्तद्विशेषाणामवगतिरित्यकामेनाप्यभ्युपगन्तव्यमेव बहुभाषाविमर्शनचणेन ॥

एवं पादः पान् पत् पादं पदं इत्यादिरूपभेदनेऽप्ययमेव Ablaut विपरिणामो मूर्धाभिषिक्त इत्यास्तां विस्तरः ॥

इदं चात्र ज्ञेयं—यत् भगवान् पाणिनिः गुणसंप्रसारणादिविमर्शनेन Ablaut विपरिणामं तत्पूर्वतयाऽधिजगाम. Grimm शाब्दिकः परं Ablaut इति तदेव आधुनिकशाब्दिकप्रियेण नाम्नाऽजुहाव—इति ॥

॥ अच्प्रकरणं समाप्तम् ॥



## CONSONANTS.

## ॥ संस्कृते हलः ॥

| | Explosives | Nasals | Semi-vowels | Sibilants | Aspirate | |
|---|---|---|---|---|---|---|
| Gutturals | *k kh g gh* | *ṅ* | | | *h* | कण्ठ्याः |
| Palatals | *c ch j jh* | *ñ* | *y* | *ś* | | तालव्याः |
| Linguals | *ṭ ṭh ḍ ḍh* | *ṇ* | *r* | *ṣ* | | मूर्धन्याः |
| Dentals | *t th d dh* | *n* | *l* | *s* | | दन्त्याः |
| Labials | *p ph b bh* | *m* | | | | ओष्ठ्याः |
| Labio dental | | | *v* | | | दन्तोष्ठ्यः |
| | | | अन्तःस्थाः | ऊष्माणः | | |

आहत्य ३३ व्यञ्जनानि ॥

## ॥ मातृभाषीयहलः ॥

| Explosives | Labials | Dentals | Old Palatals | Middle Gutturals | Velars | |
|---|---|---|---|---|---|---|
| Tenues | *p* | *t* | *k̂* | *k* | *q* | Voiceless |
| Mediae | *b* | *d* | *ĝ* | *g* | *g* | Voiced |
| Tenues Aspirate | *ph* | *th* | *k̂h* | *kh* | *qh* | Voiceless |
| Mediae Aspirate | *bh* | *dh* | *ĝh* | *gh* | *gh* | Voiced |
| Nasals | *m* | *n* | *ñ* | *ṅ* | *ṅ* | ” |
| Semi-vowels | *u̯* | | *i̯* | | | ” |
| Spirants | | *s* | | | | Voiceless |
| ” | *v* | *þ, đ* | *ʒ, ʒh* | *j* | *γ* | Voiced |
| Liquids | | *l, r* | | | | ” |

आहत्य ३५ व्यञ्जनानि

इमे च वर्णा युक्त्यात्र परिकल्पिताः । चवर्गष्टवर्गश्चात्र नास्ति । अत एव संस्कृते तौ समर्थयितुं तालव्यनियमः मूर्धन्यनियमश्च प्रवर्तितः ॥

पाणिनीयास्तावत् सामान्यतो 'यरलवा अन्तःस्थाः' इत्येवं सर्वदा तेषां semi-vowel-भावमभिप्रयन्ति, अन्तः अज्झलां मध्ये तिष्ठन्ति इति व्युत्पत्त्या । तन्न समीचीनम् । यवयोः सर्वदाऽतथात्वात् । तथाहि—वस निवासे, इत्येतद्धातुस्थस्य वकारस्य, वसति उवास इत्येवं संप्रसारणरूपस्यापि दर्शनेन semi-vowel-भावेऽपि, वस आच्छादने इत्यादिषु विद्यमानस्य तददर्शनात्तत्त्वं नास्ति । एवं, इष्टं यागः इति दर्शनेन यज्धातुस्थस्य यकारस्य तत्त्वेऽपि या प्रापणे इत्यादिषु तददर्शनात्तत्वं नास्ति । अन्यत्स्वयमूह्यम् ॥

## ॥ पाणिनीयः स्थानयत्नविवेकः ॥

अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । लृतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकानुस्वारस्य । इति स्थानानि । यत्नो द्विधा—आभ्यन्तरो बाह्यश्च । आद्यश्चतुर्धा—स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानाम् । विवृतमूष्मणां स्वराणां च । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव । बाह्यप्रयत्नस्त्वेकादशधा—विवारः संवारः श्वासो नादो घोषोऽ-

घोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति ।

खयां यमाः खयः ᳲकᳲपौ विसर्गः शर एव च ।
एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥
कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः ।
अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः ॥

वर्गाणां प्रथमद्वितीयाः खयः, तथा तेषामेव यमाः, जिह्वामूलीयोपध्मानीयौ विसर्गः शषसाश्चेत्येतेषां विवारः श्वासोऽघोषश्च। अन्येषां तु संवारो नादो घोषश्च। वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः । अन्ये (द्वितीयचतुर्थौ शलश्च) महाप्राणाः । कादयो मावसानाः स्पर्शाः। यरलवा अन्तःस्थाः। शषसहा ऊष्माणः । अचः स्वराः । ᳲकᳲप इति कपाभ्यां प्रागर्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ। अं अः इत्यचः परावनुस्वारविसर्गौ । इति स्थानयत्नविवेकः ॥

## ॥ ध्वनियन्त्रम् ॥

### The Mechanism of Speech.

भावानां परस्परसंक्रमणं नाम, चेष्टाविधया स्वनविधया अन्यविधया च भवतीति उक्तमधस्तात् । तत्र सौस्वर्ययुक्तं वचनं च हृदयंगममिति को वा प्रेक्षावान् संदेग्धि ? 'तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्ते' इति हि श्रौती वाणी। तत्रापि समीचीनस्थानप्रयत्नादिभिरुच्चार्यमाणे शोभनशोभनं स्यात्। तत्र कथं ध्वन्युच्चारणमिति विमर्शनीयम् ॥

उच्छ्वसितो हि मारुतः श्वासाशयाभ्यां पुनरपि बहिर्निःश्वास्यते, उदरोरोमांससंकोचप्रयुक्तम् । सोऽयं मारुतः कण्ठनालद्वारा स्वरयन्त्रमागत्य स्वरतन्त्रीद्वारा ग्रसनिकामागच्छति स्वरतन्त्रीस्फालनं विनैव । तदनन्तरं मुखस्रोतसा नासास्रोतसा वा बहिर्निस्सरति । एवं सामान्यत उच्छ्वासनिःश्वासौ भवतः अबोधपूर्वमेव । इमे च निःश्वासाः बोधपूर्वं स्थानप्रयत्नाभ्यां वर्णत्वेन विपरिवर्त्यन्ते । तत्र ध्वनिकरणानि पुनरेवं प्राधान्येन—

| | | | |
|---|---|---|---|
| Nasal Passage | नासास्रोतः | Lower Jaw | अधोहनुः |
| Pharynx | ग्रसनिका | Glottis | गलः |
| Oesophagus | अन्ननलिका | Vocal Chords | स्वरतन्त्र्यः |
| Larynx | स्वरयन्त्रम् | Hard Palate | कठिनतालु |
| Tongue | जिह्वा | Soft Palate (Velum Palati) | कोमलतालु |
| Passage of mouth | मुखस्रोतः | Uvula | गलशुण्डिका |
| Incisor | कर्तनः (दन्तः) | Epiglottis | अधिजिह्विका. |
| Teeth | दन्ताः | | |

विवृतप्रयत्नः—गलद्वारस्थमांसानां स्वरतन्त्रीघटितानां शिथिलतयाऽवस्थितिः Flexible condition of the vocal chords.

श्वासप्रयत्नः—Voiceless.

अघोषप्रयत्नः—Noiseless.

संवृतप्रयत्नः—गलद्वारस्थमांसानां स्वरतन्त्रीघटितानां वायुनिःसरणरोधं कर्तुमवस्थितिः. Tension of the vocal chords.

नादप्रयत्नः—[illegible] Voiced.

घोषप्रयत्नः—Noised.




1. Incisor
2. Teeth
3. Lower jaw
4. Glottis and Vocal chords
5. Hard Palate
6. Soft Palate
7. Uvula
8. Epiglottis

| Idg. | Skt. |
|---|---|
| gh+t | gdh |
| gh(—asp.) | g |
| 21. m | m |
| m+t | nt |
| m+u̯ | nv |
| 22. n | n |
| c+n | cñ |
| j+n | jñ |
| (s>ṣ, r, ṛ)+n | ṇ |
| 23. ñ+k̂ | ṁś |
| ñ+ĝ | ñj |
| ñ+ĝh | ṁh |
| 24. ṅ | ṅ |
| ṅ+ge | ñca |
| 25. ṅ (Velar) | ṅ |
| 26. u̯ | v |
| 27. i̯ | y |
| 28. s | s |
| s+d | ḍ |
| s+dh | ḍh |
| (ĭ, ŭ)s | ṣ |
| (i̯, u̯, r̥, ṛ)s | ṣ |
| (ă, ĕ, ŏ) ss | (ă)ts |
| (ĭ, ŭ)ss | kṣ |

| Idg. | Skt. |
|---|---|
| (i̯, u̯, r̥, ṛ)ss | kṣ |
| (हल्)s(हल्) | लुप्यते |
| s(—s, k̂) | ś |
| 29. v | v |
| 30. đ, þ | ṣ |
| 31. (हल्)ʒ(हल्) | लुप्यते |
| a-, e-, o-ʒd | ed |
| ā-, ē-, ō-ʒd | ād |
| (ĭ, ŭ, i̯, u̯)ʒd | ḍ |
| ʒb | db |
| (ĭ, ŭ, i̯, u̯)ʒb | ḍo |
| ʒg | dg |
| ʒg(+तालव्यः) | jj |
| 32. j | y |
| 33. γ | h |
| 34. r | r̥ |
| 35. l | l, r |
| l+t | ṭ |
| l+th | ṭh |
| l+d | ḍ |
| l+dh | ḍh |
| l+n | ṇ |
| l+s | ṣ |

## ॥ हल्विपरिणामेष्ववधेयांशाः ॥

तालव्यनियमः ५६—५९ पुटेषु द्रष्टव्यः ।

मूर्धन्यनियमः ५९—६३ पुटेषु द्रष्टव्यः ।

4, 8, 12, 16, 20. एषु झषां aspirated वर्णेषु अव्यवधानेन व्यवधानेन वा परेषु जश्त्वप्रवृत्तिः Grassmann नियमेनेत्यवधेयम् ॥

9. * $\bar{k}$. अस्य लेटिन्-ग्रीक्प्रभृतिषु पाश्चात्यभाषासु *k* इत्येव स्थितिः । आर्यन्-आर्मीनियन्-प्रभृतिप्राच्यभाषासु परं शकारात्मना विपरिणामः । यत एव पाश्चात्यभाषाः Centum languages, प्राच्यभाषाः Śatam languages इति च Von Bradke नाम्ना विमर्शकेन विभक्ताः । यथा—

* *$\bar{k}$m̥tom* Skt. *śatam* Gk. *e-katon* Lat. *centum*.

कण्ठ्यवर्गाणां त्रयाणां मध्ये प्राच्यभाषासु मध्याधःकण्ठ्यौ समानयोगक्षेमौ, अग्रकण्ठ्यो विलक्षणः, पाश्चात्यभाषासु परं मध्याग्रकण्ठ्यौ तुल्ययोगक्षेमौ, अधःकण्ठ्यो विलक्षणः. Śatam भाषासु कण्ठ्यस्य तालव्यताधिगमः, Centum भाषासु ओष्ठ्यताधिगम इत्यप्यस्ति विशेषः । यथा— * *qe* Skt. *ca* Lat. *que*.

12. * *ĝh* कारस्य Pr. Aryan काले *zh* कारात्मना, संस्कृते *h* कारात्मना च विपरिणामः । तस्यापवादः *ujjhitas* इत्यत्र—* *ud-jhita-s* > Skt. *ujjhitas*, यत्र पूर्वतनझकारो यथावस्थितस्तिष्ठति ॥

13, 17, 28. एषु निर्दिष्टं सस्य षत्वविधानं 'इण्कोः' इति सूत्रेण तुल्यनिमित्तकम्।

16, 20. * *gh*, *gh* कारयोस्तालव्यानिमित्ते Pr. Aryan भाषायां *jh* इति, संस्कृते *h* इति च विपरिणामः। तदभावे यथापूर्वमवस्थितिः॥

22. * (*r*, *ṛ*, *s* > *ṣ*) + *n* > Skt. *ṇ*. सुगम एवायं नियमः 'रषाभ्यां नो णः समानपदे' इति सूत्रार्थं जानताम्। णत्वमिदं व्यवधानेऽपि भवति, 'अट्कुप्वाङ्—' इत्युक्तादिशा॥

26. 27. *u̯*, *i̯* कारयोः *v*, *y* कारात्मना विपरिणामस्य diphthongs स्थले बाधः, तत्र तयोः *o*, *e* कारात्मना विपरिणामस्य अच्प्रकरण एवाभिहितत्वात्॥

26. मातृभाषायां पदादौ विद्यमानस्य *u̯* वर्णस्य *u*, *ū*, *ə* वर्णपरकत्वे संस्कृते लोपः स्यात्॥

28. *ĭ ŭ i̯ u̯ ṛ r* एभ्यः परः *s* कारः Pr. Ar. भाषायां *ś* इति, संस्कृते *ṣ* इति च विपरिणमते।

तादृशौ *ss* कारौ Pr. Ar. भाषायां *śś* इति, संस्कृतभाषायां *kṣ* इति च विपरिणमतः।

तादृशात् *s* कारात् *ss* काराभ्यां वा यदि नाम *ṛ* or *r* वर्णः परः स्यात्तदा ते स्वरूपेणैवावतिष्ठन्ते।

*ă ĕ ŏ* कारेभ्यः परौ *ss* वर्णौ संस्कृते *ts* इति भवतः। कदाचित्तयोरन्यतरस्य लोपो भवति।

Explosive मध्ये विद्यमानः *s* वर्णो लुप्यते ।

*s* or *k̑* वर्णसमीपे विद्यमानः *s* वर्णः *ś* वर्णो भवति ॥

31. मातृभाषायां विद्यमानः *aʒd, eʒd, oʒd* वर्णः Pr. Ar. भाषायां *azd* इति, संस्कृते *ed* इति च भवति ।

*āʒd, ēʒd, ōʒd* वर्णस्तु तादृशः Pr. Ar. भाषायां *āʒd* इति, संस्कृतभाषायां *ād* इति च भवति ।

*ĭ ŭ i̯ u̯* वर्णेभ्यः परः *ʒd*, Pr. Ar. भाषायां *ʒd* इति, संस्कृते *ḍ* इति च भवति ।

तादृशः *ʒb*, Pr. Ar. भाषायां *zb* इति, संस्कृते *ḍb* इति च भवति । शुद्धस्तु *db* इति ।

*ă ĕ ŏ* कारेभ्यः परः *ʒg* वर्णः उत्तरत्र तालव्यनिमित्तस्याविद्यमानत्वे *dg* इति, विद्यमानत्वे *jj* इति च भवति ।

Explosive मध्ये विद्यमान *ʒ* वर्णः संस्कृतेऽविद्यमानवद्भवति ॥

## ॥ क्रमेणोदाहरणानि ॥

| No. | Idg. | Skt. | Idg. | Skt. | Iran. |
|---|---|---|---|---|---|
| 1. | *p* | *p* | *pətér*<br>*pelek̑us* | *pitā́ (r)*<br>*paraśus* | |
| 2. | *ph* | *ph* | *kapha*<br>*k̑apho* | *kapha*<br>*śapha* | *kafa*<br>*safa* |

| Idg. | Skt. | Idg. | Skt. |
|---|---|---|---|
| *b* | *b* | *bolom* | *balam* |
| | | *lambetai̯* | *lambate* |
| *bh* | *bh* | *bherō* | *bharāmi* |
| | | *bhrātēr* | *bhrātā(r)* |
| *bh* (—asp.) | *b* | *bheu̯dhō* | *bodhāmi* |
| *bh* | *h* | *bherō* | *harāmi* |

कृतसादृश्येन *bh* > *h* इति Uhlenbeck. यथा—
ed. *gr̥bhṇāmi* > Skt. *gr̥hṇāmi*.

| Idg. | Skt. | Idg. | Skt. |
|---|---|---|---|
| *bht* | *bdh* | *labhta* | *labdha* |
| *t* | *t* | *trei̯es* | *trayas* |
| | | *u̯ertetai̯* | *vartate* |
| (*s* > *ṣ*) *t* | *ṭ* | *ustos* | *uṣṭas* |
| *tke* | *cca* | *utke* | *ucca* |
| *th* | *th* | *u̯oi̯ttha* | *vettha* |
| *d* | *d* | *deḱm̥* | *daśa* |
| | | *du̯ōu̯* | *dvau* |
| *ddh* | *h* | *deddhi* | *dehi* |
| *dn* | *nn* | *ednom* | *annam* |
| *dh* | *dh* | *dhūmos* | *dhūmas* |
| | | *medhi̯os* | *madhyas* |
| *dh* | *h* | *deddhi* | *dehi* |
| | | *medhai* | *mahe* |
| *dh* (—asp.) | *d* | *dhidhēmi* | *dadhāmi* |

| No. | Idg. | Skt. | Idg. | Skt. |
|---|---|---|---|---|
| | *dht* | *ddh* | *bhn̥dhtos* | *baddhas* |
| | *dhn* | *dhn* | *bhudhnos* | *budhnas* |
| 9. | *k̂* | *ś* | *k̂m̥tom* | *śatam* |
| | | | *su̯ek̂uros* | *śvaśuras* |
| | *k̂t* | *ṣṭ* | *ok̂tōu̯* | *aṣṭau* |
| | | | *u̯ek̂ti* | *vaṣṭi* |
| | *k̂s* | *kṣ* | *dek̂sinos* | *dakṣiṇas* |
| | | | *u̯ek̂si* | *vakṣi* |
| | *k̂þ* | *kṣ* | *k̂þitis* | *kṣitis* |
| 10. | *sk̂* | *ch* | *ĝm̥sk̂ō* | *ga(c)chāmi* |
| | | | *pr̥k̂sk̂o* | *pr̥cchāmi* |

इदं च Brugmann मतेन. Uhlenbeck पण्डितस्तु Skt. *cch* इत्यस्य मूलं * *skh*, * *sk̂h* वा इति संदेग्धि। यदि * *skh* मूलं, गच्छति पृच्छतीत्यादौ तालव्यनियमेन छकारः, गच्छामि पृच्छामीत्यादौ तु Analogy द्वारैव । यथा—

| | Brugmann. | Uhlenbeck. | |
|---|---|---|---|
| 1. Skt. *gacchati* < | * *ĝm̥sk̂eti* | * *ĝm̥skheti* | |
| 2. " *pr̥cchati* < | * *pr̥k̂sk̂eti* | * *pr̥k̂skheti* | |
| 3. " *gacchāmi* < | * *ĝm̥sk̂ō* | * *ĝm̥skhō* | } Analogy. |
| 4. " *pr̥cchāmi* < | * *pr̥k̂sk̂ō* | * *pr̥k̂skhō* | |

| No. | Idg. | Skt. | Idg. | Skt. |
|---|---|---|---|---|
| 11. | *ĝ* | *j* | *ĝōnu* | *jānu* |
| | | | *ĝenos* | *janas* |
| | *ĝbh* | *ḍbh* | *u̯iĝbhis* | *viḍbhis* |
| | *ĝđh* | *kṣ* | *ĝđhōs* | *kṣās* |
| 12. | *ĝh* | *h* | *ĝhansas* | *haṁsas* |
| | | | *ĝhei̯men* | *heman* |
| | | | *bhāĝhus* | *bāhus* |
| | | | *u̯eĝheti* | *vahati* |
| | | | *ĝhəmo* | *hima* |
| | | | *iĝho* | *iha* |
| | | | *ghūĝheti* | *gūhati* |
| | | | *lei̯ghmi* | *lehmi* |
| | *ĝh* | *jh* | *udĝhətos* | *ujjhitas* |
| | *ĝht* | *ḍh* | *uĝhtos* | *ūḍhas* |
| | | | *dhr̥ĝhtos* | *dr̥ḍhas* |
| | | | *u̯eĝhtum* | *voḍhum* |
| | *ĝh* (—asp.) | *j* | *ĝhiĝhāmi* | *jahāmi* |
| 13. | *k* | *k* | *kakudmēn* | *kakudmān* |
| | | | *kūlos* | *kālas* |
| | | | *k̑ukis* | *śucis* |
| | *k(ĭ)* | *c* | *leu̯ketai̯* | *rocate* |
| | *k(ĕ)* | *c* | *ki̯eu̯etai̯* | *cyavate* |
| | *k(i̯)* | *c* | *dheksi̯ō* | *dhakṣyāmi* |
| | *ks* | *kṣ* | *i̯eksi̯ō* | *yakṣyāmi* |

| No. | Idg. | Skt. | Idg. | Skt. |
| --- | --- | --- | --- | --- |
| | *kp* | *kṣ* | *kpotos* | *kṣatas* |
| 14. | *kh* | *kh* | *k̂oṅkhos* | *śaṅkhas* |
| 15. | *g* | *g* | *ugros* | *ugras* |
| | | | *jugom* | *yugam* |
| | *g(ĕ)* | *j* | *au̯ges* | *ojas* |
| 16. | *gh* | *gh* | *dəlghos* | *dīrghas* |
| | *gh(ĭ ĕ i̯)* | *h* | *dhrughes* | *druhas* (Ved.) |

Old palatal वर्णानां New palatal वर्णानां चावगमनोपायः कथम्? यत्र एकप्रकृतिकेष्वेव शब्देषु Palatal स्थाने एकत्र तालव्या अन्यत्र च मूर्धन्या व्यवतिष्ठन्ते तत्र Old palatal वर्णा इति विज्ञेयम्। यथा—*rājā, samrāṭ; yajñam, iṣṭam.* तथा स्वतः Palatal स्थाने मूर्धन्यस्य विद्यमानत्वेऽपि Old palatal वर्णा एव। यथा— * *ŭĝhtos > ūḍhas.* एवमेव Palatal स्थाने संस्कृतभाषायां तालव्यस्य, Avestic भाषायां *sh, z, zh* वर्णध्वन्यतमस्य च विद्यमानत्वे विभावनीयम्॥ यथा—Skt. *jānus* Aves. *zānus.*

यत्र तु एकप्रकृतिकेष्वेव शब्देषु Palatal स्थाने एकत्र तालव्या अपरत्र च कण्ठ्या दृश्यन्ते तत्र New palatal वर्णाः। यथा— * *auges > ojas;* * *ugros > ugras.*

| No. | Idg. | Skt. | Idg. | Skt. |
| --- | --- | --- | --- | --- |
| 17. | q | k | qoteros | kataras |
| | | | peṅqtis | paṅktis |
| | q(ĭ) | c | qid | cid |
| | q(ĕ) | c | qerus | carus |
| | qs | kṣ | u̯eqsi̯ō | vakṣyāmi |
| | qph | kṣ | qphinōmi | kṣiṇōmi |
| | | | qphitis | kṣitis (नाशार्थकः) |
| 18. | qh | kh | sqhalō | skhalāmi |
| 19. | g̦ | g | g̦ōu̯s | gaus |
| | | | g̦ərus | gurus |
| | g̦(ĭ) | j | g̦īu̯os | jīvas |
| | g̦(ĕ) | j | g̦eretai̯ | jarate |
| | g̦(i̯) | j | g̦i̯ā | jyā |
| | g̦đh | kṣ | g̦đherō | kṣarāmi |
| 20. | g̦h | gh | g̦honos | ghanas |
| | g̦h(ĕ) | h | g̦henmi | hanmi |
| | g̦h(i̯) | h | dhrug̦hi̯eti | druhyati |
| | g̦ht | gdh | deg̦htos | dagdhas |
| | g̦h(—asp.) | g | g̦heg̦hona | jaghana |
| 21. | m | m | mātē (r) | mātā (r) |
| | | | g̦hormos | gharmas |
| | mt | nt | g̦emtu | gantu (Ved.) |
| | mu̯ | nv | g̦eg̦m̥mu̯ōs | jaganvān (गतवा |

| No. | Idg. | Skt. | Idg. | Skt. |
|---|---|---|---|---|
| 22. | *n* | *n* | *nebhos* | *nabhas* |
| | | | *nōmn̥* | *nāma* |
| | *cn* | *cñ* | *yācnō* | *yācñā* |
| | *(ĝ)n* | *jñ* | *i̯aĝnos* | *yajñas* |
| | (*s* > *ṣ*, *r*, *r̥*) *n* | *ṇ* | *usnos* | *uṣṇas* |
| | | | *ernos* | *arṇas* |
| | | | *kr̥snos* | *kr̥ṣṇas* |
| 23. | *ñk̑* | *ṁś* | *ēnoñk̑a* | *ānaṁśa* |
| | *ñĝ* | *ñj* | *kuñĝos* | *kuñjas* |
| | *ñĝh* | *ṁh* | *añĝhos* | *aṁhas* |
| 24. | *ṅ* | *ṅ* | *oṅkos* | *aṅkas* |
| | *ṅqe* | *ñca* | *peṅqe* | *pañca* |
| 25. | *ṅ* (Velar) | *ṅ* | *bhoṅgos* | *bhaṅgas* |
| 26. | *u̯* | *v* | *u̯eqes* | *vacas* |
| | | | *neu̯os* | *navas* |
| | *u̯* | लोपः | *u̯ərenos* | *urṇas* |
| | | | *u̯ərdhu̯os* | *ūrdhvas* |
| | | | *u̯əlmis* | *ūrmis* |
| 27. | *i̯* | *y* | *i̯os* | *yas* |
| | | | *i̯aĝnos* | *yajñas* |
| 28. | *s* | *s* | *septn̥* | *sapta* |
| | | | *restai̯* | *raste* |

| No. | Idg. | Skt. | Idg. | Skt. |
|---|---|---|---|---|
| | *sd* | *ḍ* | *nis( > ʒ)dos* | *nīḍas* |
| | *sdh* | *ḍh* | *misdhom* | *mīḍham* (Ved.) (पारितोषिकम्) |
| | *ĭ̆s* | *ĭ̆ṣ* | *sthisthāmi* | *tiṣṭhāmi* |
| | *ŭ̆s* | *ŭ̆ṣ* | *ustos* | *uṣṭas* (दाहः दहनम्) |
| | *i̯s* | *eṣ* | *u̯l̥qoi̯su* | *vr̥keṣu* |
| | *u̯s* | *oṣ* | *ĝeu̯ster* | *joṣṭar* (Ved.) |
| | *r̥s* | *r̥ṣ* | *dhr̥sneu̯mi* | *dhr̥ṣṇomi* |
| | *rs* | *rṣ* | *k̂ərso* | *śīrṣa* |
| | | | *ṣaṭ* इत्यत्र *s* कारात्पूर्वं *i* कार आसीत् । स च *s* कारस्य मूर्धन्यतां संपाद्य विनष्टः ॥ | |
| | *i̯ss* | *ekṣ* | *du̯ei̯ssi* | *dvekṣi* |
| | *u̯ss* | *okṣ* | *sau̯ssi̯ō* | *śokṣyāmi* |
| | *isr̥* | *isr̥* | *tisr̥bhis* | *tisr̥bhis* |
| | *isr* | *isr* | *tisres* | *tisras* |
| | *ess* | *ats* | *vessi̯ō* | *vatsyāmi* |
| | | | *u̯idu̯essu* | *vidvatsu* |
| | *ess* | *as* | *essi* | *asi* |
| | *tsth* | *tth* | *utsthātum* | *utthātum* |
| | *s...k̂* | *ś...ś* | *su̯ek̂uros* | *śvaśuras* |
| | *s...s* | *ś...ṣ* | *suskos* | *śuṣkas* |
| | *k̂...s* | *ś...ś* | *k̂asos* | *śaśas* |
| 29. | *v* | *v* | *vestai̯* | *vaste* |

| No. | Idg. | Skt. | Idg. | Skt. |
|---|---|---|---|---|
| 30. | *đ*, *þ* | *ṣ* | *ṛkđos* | *ṛkṣas* |
| | | | *tekþos* | *takṣas* |
| 31. | *ǝ*, *ǝ* | लोपः | *amugǝdhuom* | *amugdhvam* |
| | *eǝd* | *ed* | *seǝdiēt* | *sedyāt* |
| | | | *eǝdhi* | *edhi* |
| | *āǝdh* | *ādh* | *k̑āǝdhi* | *śādhi* |
| | *ēǝdh* | *ādh* | *ēǝdhuei* | *ādhve* |

आध्वे, शाधि इत्यादौ लुप्तस्य ǝ वर्णस्य अवर्णात्परत्वेनोत्तरत्र विद्यमानस्य तव-

| No. | Idg. | Skt. | Idg. | Skt. |
|---|---|---|---|---|
| 33. | *γ* | *h* | *eγom* | *aham* |
| | | | *γenus* | *hanus* |
| | | | *γe* | *ha* |
| | | | *γostos* | *hastas* |
| | | | *dhuγətēr* | *duhitā(r)* |
| | | | *meγēn* | *mahān* |
| 34. | *r* | *r* | *rēs* | *rās* |
| | | | *bherō* | *bharāmi* |
| | | | *reĝi̯o* | *rajyāmi* |
| 35. | *l* | *l* | *limpō* | *limpāmi* |
| | | | *alpos* | *alpas* |
| | *l* | *r* | *leksō* | *rakṣāmi* |
| | | | *leloi̯ge* | *rireca* |
| | | | *plethetai̯* | *prathate* |
| | | | *k̂leu̯os* | *śravas* |
| | *lt* | *ṭ* | *paltos* | *paṭas* |
| | *lth* | *ṭh* | *kulth* | *kuṭhāra* |
| | *ln* | *ṇ* | *pālnis* | *pāṇis* |
| | *ls* | *ṣ* | *lalsō* | *laṣāmi* |

तत्सिद्धं संस्कृतभाषावस्थितानां हलां यथायोगं मातृभाषायामेताः प्रकृतय इति ॥ यथा—

| Skt. | Idg. |
|---|---|
| *k* | *k*, *q* |
| *kh* | *kh*, *qh* |
| *g* | *g*, *gh*(—asp.), *g̑*, *g̑h* (—asp.), *g̑h*(*t*) |
| *gh* | *gh*, *g̑h* |
| *ṅ* | *ṅ*, *ṅ*(Velar) |
| *c* | *k*(*ĭ*, *ĕ*, *i̯*), *q* (*ĭ*, *ĕ*, *i̯*), *t*(*ke*) |
| *ch* | *sk̑* |
| *j* | *g*(*ĭ*, *ĕ*, *i̯*), *g̑* (*ĭ*, *ĕ*, *i̯*), *ĝ*, *ĝh* (—asp.), (*ñ*)*g* |
| *jh* | *ĝh* (in *ujjhitas*) |
| *ñ* | *ṅ*(*qe*), (*c*, *j*)*n*, *ñ*(*q*) |
| *ṭ* | *lt*, (*k̑*)*t*, (s > ṣ)*t* |
| *ṭh* | *lth* |
| *ḍ* | *ld*, *ĝ*(*bh*), *sd*, (*ĭ*, *ĕ*, *i̯*, *u̯*)-*z*-(*d*, *b*) |
| *ḍh* | *ldh*, *sdh*, *ĝht* |
| *ṇ* | *ln*, (*s* > *ṣ*, *r*, *r*)*n* |
| *t* | *t*, (*ā*, *ĕ*, *ō*)-*s*-(s) |
| *th* | *th* |
| *d* | *d*, *dh* (—asp.), *dh*(*t*), (*ă*, *ĕ*, *ŏ*)*zd*, *z*(*b*, *g*) |
| *dh* | *dh*, (*dh*, *bh*) *t*, (*g̑h*) *t* |
| | , *d* (*ṇ*), *m* (*t*, *r*) |

| Skt. | Idg. |
|---|---|
| *p* | *p* |
| *ph* | *ph* |
| *b* | *b*, *bh* (—asp.). *bh*(*t*) |
| *bh* | *bh* |
| *m* | *m*, *n̥̄*·(*k̂*, *ĝh*) |
| *y* | *j*, *i̯* |
| *r* | *r*, *l* |
| *l* | *l* |
| *v* | *u̯*, *v* |
| *ś* | *k̂*, *s*(—*s*, *k̂*) |
| *ṣ* | *ls*, *đ*, þ, (*ī̆*, *ū̆*, *i̯*, *u̯*, *r̥*, *r*)s, *k̂*(*t*), (*k̂*)s, (*k̂*)þ, (*ĝ*)*đh*, (*k*)*s*, (*k*)þ, (*q*)s, *q*(þ*h*), (*g*)*đh* |
| *s* | *s* |
| *h* | *bh*, *dh*, *ddh*, *ĝh*, *gh*(*ī̆*, *ĕ̄*, *i̯*), *gh* (*ī̆*, *ĕ*, *i̯*), γ |
| *kṣ* | *k̂s*, *k̂*þ, *ĝđh*, *ks*, *k*þ, *qs*, *q*þ*h*, *gđh*, (*ī̆*, *ū̆*, *i̯*, *u̯*, *r*, *r̥*)*ss*. |



# ॥ पदनिष्पत्तिविचारः ॥

## MORPHOLOGY

Morphology नाम पदनिष्पत्तिविचारशास्त्रम् । तच्च प्राधान्येन भवति चतुर्धा—

1. Nominal morphology
2. Pronominal morphology
3. Numeral morphology
4. Verbal morphology.

१. नामवाचकपदनिष्पत्तिविचारः
२. सर्वनामनिष्पत्तिविचारः
३. संख्यावाचकपदनिष्पत्तिविचारः
४. धातुनिष्पत्तिविचारः—इति ॥

कानि नाम पदानि, कथं वा तेषामुत्पत्तिः ? अत्र Brugmann अभिप्रैति—सुप्तिङन्तानि पदानि, तानि च प्रकृतिमूलभूतधातूनां प्रत्ययमूलभूतधातूनां च मेलनेन निष्पद्यन्ते । तथाहि । मातृभाषायां तावत् (1) Predicative roots, (2) Pronominal roots, Demonstrative roots or symbolic elements इति धातवो द्विधाऽवतिष्ठन्ते । तेषामभिवृद्धिकाले

उभावपि मिलित्वा एकपदत्वेनाभूताम् । क्रमेण चादिमो वर्धिष्णुत्वात्प्रकृतित्वेन, अन्तिमः क्रमशः क्षीयमाणत्वात्प्रत्ययत्वेन च विपरिणतः । द्वितीयभेदादेव सर्वनामानि संजातानि । तथा चादौ प्रकृतिप्रत्ययविभागो नासीत् । सर्वाः प्रकृतय एव । ताश्च स्वातन्त्र्येणैवार्थबोधिकाः । तासु काश्चन कालवशाद्व्यवहारवशाच्चापगतस्वतन्त्रभावाः क्रमेण परिक्षीणाश्च प्रत्ययशब्दव्यवहार्या अभूवन् । यथा द्वयसच् दघ्नच् मात्रच् काम्यच् जाहच् जातीयर् देशीयर् कल्पप् पाशप् रूपप् कल्पबादयः । इमे च पूर्वं स्वातन्त्र्येण अन्यार्थावबोधकाः । क्रमेण क्षीयमाणाः परमर्षिणा पाणिनिना सूत्रकाले प्रत्ययत्वेन नियमिता अर्थविशेषानवगमयितुमारब्धाः । पश्चात्संस्कृतभाषाया व्यवहाराभावात् तथैव व्यवतिष्ठन्ते । यथा—इन्द्रकल्पः अयस्पाशः इत्यादयः । अत्रेमे सादृश्यार्थविशेषबोधकाः । स्वातन्त्र्येणार्थावबोधकत्वं चैतेषां केशपाशः पाशः, पुराकल्पं कल्पः, पुत्रकाम्या काम्यं, इत्यादिषु स्पष्टमेव । दाता इत्यत्र दा इत्ययं यथा स्वातन्त्र्येणार्थबोधकस्तथा तृ इत्ययमपि । तस्य चायमर्थः—तरणम् अतीत्य गमनमिति । नहि लोके दानरूपेण दत्तस्य पुनर्ग्रहणं दृष्टम् । स चाद्य कालवशादपगतस्वतन्त्रभावः प्रत्ययत्वेनैव गम्यते । आङ्गलभाषायामपि *friendship* इत्यादौ *ship* प्रभृतीनां प्रत्ययत्वं लक्ष्यते. *kindly, manly* इत्यादिषु क्रमेणोपक्षीयमाणानां प्रकृतीनां प्रत्ययत्वम् । इण्डोजर्मानिक् भाषायां क्रियाविशेषणत्वेनावस्थितान्यपि पदानि संस्कृतभाषायां प्रत्ययत्वेन लक्ष्यन्ते । यथा—* *e-bherom* > Skt. *abharam*

इत्यत्र भूतकालवाची अडागमः. Schlegel प्रभृतयस्तु पदानां परस्परमेलने केषांचन व्यवहारवशात्कालवशाच्च प्राधान्यापगमेन प्रत्ययत्वेन विपरिणामः, न एव पाशवादय इति मन्यते ॥

## ॥ अथ प्रत्ययाः ॥
## SUFFIXES.

प्रत्ययाश्च प्राधान्येन भवन्ति द्विधा—

१. प्रातिपदिकसिद्धये संयोज्यमानाः प्रत्ययाः
(Stem-forming suffixes)

२. पदनिष्पत्तये संयोज्यमानाः प्रत्ययाः ।
(Word-forming suffixes)

अनयोः क्रमात् Formative suffixes, Inflexional suffixes इति च नामान्तरमस्ति ।

तत्राद्यो द्विधा—(1) Primary suffixes कृत्प्रत्ययाः (2) Secondary suffixes तद्धितप्रत्यया इति ।

द्वितीयो द्विधा— (1) Case-endings (2) Personal or verbal endings. आद्याः सुपः, द्वितीयास्तिङः । पाणिनिस्तु मिलितं कुत्रचित् कृत्प्रत्ययत्वेन अभिप्रैति, यथा—क्तवतुप्रत्यये ॥

अत्रेदमवधेयम् । पाणिनिरपि प्रथमं प्रत्ययान् कृत्तद्धित-रूपेण द्विधा विभक्तवान् । तस्य चायमाशयः, शब्दानां प्रातिपदिकत्वमात्रसंपादकाः धातोरनन्तरं प्रयोगयोग्याश्च कृतः । तेषां प्रयोगयोग्यतासंपादकाः कृदन्तादेव प्रयोगयोग्याश्च तद्धिताः । अत एव तस्मै प्रयोगाय हिताः तद्धिताः इत्यन्वर्थमपि तेषां नाम ॥

एवं कृत्तद्धितविभागो यः पाणिनिना कृतः सोऽसमीचीनः आधुनिकशाब्दिकरीत्या। तेनैव तद्धितत्वेन परिगणितानां केषांचित् अतथाकारित्वेनाव्याप्तेः । कृतो यथा प्रातिपदिकत्वमात्रसंपादकाः तथैव तद्धिता अपि । प्रयोगयोग्यतासंपादकास्तु सुपः तिङश्च । किंचैतेषां प्रयोगविषये यो नियम उक्तः सोऽपि, यज् ईय पितृव्य इत्यादौ तद्धितदर्शनेन व्यभिचारदर्शनादसमीचीनः ॥

एकस्यैव कृत्प्रत्ययत्वं तद्धितप्रत्ययत्वं च लक्ष्यते । यथा व-र-कप्रत्ययानां अश्व छिद्र शुष्क, विधवा तमिस्र अन्तिक इति स्थलेषु क्रमश उभयरूपत्वम् । आदौ तद्धितप्रत्ययतयावस्थितानामिदानीं कृत्प्रत्ययत्वं च लक्ष्यते । यथा तव्य-अनीयरादयः । अतोऽस्मदुक्तनयेनैव विभागः कार्यः ॥

पुनस्ते द्विविधाः 1. Simple suffixes व्यस्ताः प्रत्ययाः 2. Compound or complex suffixes समस्ताः प्रत्ययाः । कृत्प्रत्ययमात्रावस्थाने आद्यः स्यात् । कृत्तद्धितयोरवस्थाने द्वितीयः ।

Brugmann पण्डितः Complex प्रत्ययानामुत्पत्तेः त्रीणि कारणानि पश्यति । तानि यथा—

1. सुबन्तरूपेषु प्रातिपदिकानामन्तविपर्यासेनेमे भवन्ति प्रत्ययाः । तत्र हलन्तशब्दानाजन्तत्वेन भ्रमाद्विपरिणामेन जायमाना यथा—Avestic भाषायां

1. *bharant+o* प्रथमा विभक्तिः athematic.
2. *bharant+em* द्वितीया विभक्तिः athematic.
3. *bharante+he* षष्ठी विभक्तिः thematic.

अत्र *bharant* इति हलन्तात् द्वितीयैकवचने *em* इत्यस्य प्रत्ययत्वेऽपि *m* कारं तथा मत्वा शिष्टस्य प्रकृतित्वं मन्यमानाः ततोऽपि षष्ठ्येकवचने *he* इति प्रत्ययं प्रयुक्तवन्तः । अत्र प्रत्ययांशस्य प्रकृत्यंशत्वभ्रमः । राध् क्षुप् स्रव् इत्यादौ ध् स् व् प्रभृतीनां प्रत्ययत्वेऽपि विशिष्टस्य प्रकृतित्वं वैयाकरणा मन्यन्ते । एवं दन्तादिशब्देष्वपि लक्ष्यते । यथा * √*od+ont* > Skt. √*ad+ant=adant.* इदं athematic. ततः पूर्वतनस्य अवर्णस्य क्रमादन्ते संयोजनेन *danta* इत्यभूत् । ततः स्वादिप्रत्यये दन्तः इत्यादिरूपाणि निष्पद्यन्ते । अस्यैवापचयावस्था *dat* इति । एवं √*bhad+ant* इति स्थिते अन्ते अवर्णयोजनेन *bhadanta* इति भवति । अत्र सर्वत्र Complex प्रत्यया व्यवतिष्ठन्ते । हलन्तशब्दानामजन्तत्वेन विपरिणामो भागुरिणाप्यभ्युपगतः । वाच्+आ=वाचा, निश्+आ=निशा, दिश्+आ =दिशा । तथा च वैयाकरणाः—वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ इत्याहुः । पाणिनिरपि रोहन्त् वर्धन्त् इत्यनयोः रोहन्त वर्धन्त इति रूपमभिप्रैति ॥

द्वितीयं कारणम् । प्रकृतिप्रत्यययोर्मेलने संनिकर्षातिशयात् तयोः केषांचन वर्णानां लोपात्संमिश्रणाद्वा प्रकृतिसंबन्धिनोऽपि वर्णस्य प्रत्ययसंबन्धित्वेन भ्रमात्तेषामन्यत्र प्रत्ययत्वेन प्रयोगेण इमे भवन्ति । यथा तक्षन्+ई=तक्ष्णी । अत्र ईकारस्य प्रत्ययत्वेऽपि ई कारं तथा मन्वानाः पत्नी इत्यादावपि तत्त्वेन तं

प्रयुक्तवन्तः । एवं इन्द्राणी आचार्याणी इत्यादिषु आनुग्विषयेष्व-पि सुधीभिरूह्येयाः । अत्र प्रकृत्यंशस्य प्रत्ययांशत्वेन भ्रमः ॥

तृतीयं कारणम् । प्रकृत्यर्थस्य दृढतरत्वसंपादनाय समाना-र्थकप्रत्ययानामेकत्रैव द्वित्रिकृत्वः प्रयोगेण भवन्तीमे प्रत्ययाः । यथा—ज्येष्ठतमः पुरुषत्वता । आद्ये इष्ठ-तमयोः, द्वितीये त्व-तलोः समुच्चित्य प्रयोगः । इमे च Complex प्रत्ययाः नेदानीं-तनाः, अपि तु इण्डोजर्मानिकालादारभ्यैव अवातिष्ठन्तेत्यभ्यू-ह्यते । अरित्रम् । अत्र *ter* प्रत्ययस्यापचयदशायां *tṛ* इत्यवस्थाने *a* इति प्रत्ययान्तरसंयोगे अरित्रमिति भवति । अत्र *tṛ-a-m* एतेषां समुच्चयेन Complex प्रत्ययो भवति ॥

Semantic रीत्या विविधा भवन्ति प्रत्ययाः । यथा कृत्त-द्धितादयः । यद्यप्येकस्यैव प्रत्ययस्य भाषाभेदेनार्थभेदा लक्ष्यन्ते, एकत्र वानेकार्थत्वं च लक्ष्यते इति नैते विभागमर्हन्ति, अथापि अर्थविशेषमाश्रित्यैव विभागः क्रियते. *madhyas*. अत्र विद्यमानः यस् प्रत्ययः आदौ न तरवर्थकः, अपि तु कालक्रमेणैव । मधु इति प्रकृतिरेव comparative वाचकः । यद्यपि *er era tera* प्रत्ययाः कालेदशादिषु विद्यमानं तरतमभावमेव द्योतयन्ति तथापि आमतर इत्यादिषु जातिगुणक्रियास्वपि तं बोधयितुं प्रवृत्ताः । श्रेष्ठः वरिष्ठः इत्यादिषु आदौ पूरणार्थकस्थप्रत्ययः इदानीमुत्कृष्टार्थे प्रयुज्यते । तमप्रत्ययस्य नवम-सप्तम-दशमादिषु संख्यावाचकशब्देनैव पूर्वं संबद्धस्य देश-कालवाचकशब्दैः पश्चात्संबन्ध उदभूत् । उपमा इत्यत्र विद्यमानो मकारोऽपि तम-

प्रत्ययमकार एव । गत इत्यादिषु तप्रत्ययः कर्मार्थे । पूरणमित्यत्र णप्रत्ययः कर्मार्थे । दृश्यं यज्य इत्यादिषु यकारो योग्यार्थे । बहुल वृषल इत्यादिषु लप्रत्ययो न्यूनार्थकः । सनक अर्भक इत्यादिषु विद्यमानः कप्रत्ययो न्यूनार्थकः । स्वसृ पितृ भ्रातृ इत्यादिषु विद्यमानस्तृप्रत्ययः पूर्वं न कस्मिंश्चिदप्यर्थे, इदानीं बन्धुत्वावगमकः । वृषभ इत्यत्र भकारः प्राणित्वद्योतकः । पालनकर्तरि प्रयुक्तः पितृशब्दः इदानीं जन्यजनकभावसंदर्भमाश्रित्य सर्वत्र प्रयुज्यते । एवं करणवाचकस्य कर्तृवाचकत्वमपि । यथा—त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः इत्यत्र त्राणकरणनखाः त्राणकर्तृत्वेनाभिमताः । संहारार्थवाचकौ लकप्रत्ययौ प्रीतिवाचकौ लक्ष्येते । यथा—भानुलः, अर्भकः इति ॥

Adjective suffixes. इमे च नामशब्देषु आदौ विद्यमानस्य स्वरस्यान्यत्रापगमेन निष्पद्यन्ते । यथा— मॅहस् greatness; महॅस् great. अॅपस् agility ; अपॅस् agile.

प्रत्ययानां कल्पितार्थत्वम् । पूर्वमन्यार्थबोधका अपि कालक्रमेणेदानीं भिन्नार्थबोधका लक्ष्यन्ते । इदानीं ये अर्था लक्ष्यन्ते ते इण्डोजर्मानिकालेऽप्यासन्निति न शक्यते निर्धारयितुम् । प्रत्ययाः प्रकृतिभिः सह यदा संबध्यन्ते तदा संबन्धविशेषात् नूत्ना अप्यर्थविशेषाः संजायन्ते । आहुश्च वैयाकरणाः— उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । प्रहाराहारसंहारविहारपरिहारवत् ॥ संस्कृतभाषास्थः अन् प्रत्ययः मातृभाषास्थ *en* प्रकृतिकः । स

च अक्षन्नित्यादौ उपयुज्यते । तस्य तत्रावयवद्योतकत्वम् । एवं शीर्षन् शब्देऽपि । एवमवस्थितस्य तस्य शरीरावयववाचकैः संयोजनात्पूर्वं तादृशार्थद्योतकत्वं नासीत् । अपि तु कालक्रमेण कल्पितमिति ज्ञायते । एवं आकारः स्त्रीलिङ्गद्योतक इदानीं लक्ष्यते । तत्त्वं च नास्य पूर्वमासीत्, परं तु मातेत्यादिषु आकारस्य स्त्रीत्वद्योतकत्वं दृष्ट्वा इतरत्राप्ययं तथात्वेनोपयुज्यते । ततः स्वभावेन यत्राकारान्तता दृश्यते तत्राप्याकारस्य स्त्रीत्वद्योतकत्वं कल्पयामासुः । एतेन लिङ्गं न विभक्त्याश्रयं, अपि तु प्रातिपदिकाश्रयमिति न्यायः सिद्धो भवति । वैयाकरणास्तावत् वृक्ष इत्यादौ पुंस्त्वद्योतकः, रमा धनं इत्यादिषु यथाक्रमं स्त्रीत्वनपुंसकत्वद्योतकश्च, कश्चन गुणविशेषोऽस्तीति मन्यन्ते । न तत्र समुचितानि सन्ति प्रमाणानि । अचेतना अपि चेतनत्वभ्रमात् क्वचन स्त्रीलिङ्गा व्यपदिश्यन्ते । यथा लता तटी । एवं पुंलिङ्गा अपि, यथा वृक्षादयः । विश्वपा हाहा इत्यादिषु आदन्तत्वेऽपि न स्त्रीरूपोऽर्थः । स्पष्टमुत्तरत्र लिङ्गविचारप्रस्तावे ॥

Comparative suffixes. द्वयोरन्यतरस्मिन्नर्थे विहितानां प्रत्ययानां Comparative इति नाम । यथा—ईयस्-र-तरप् ॥

Superlative suffixes. बहुष्वन्यतमस्मिन्नर्थे विहितानां प्रत्ययानां Superlative इति नाम । यथा—इष्ठन्-तमप् ॥

एषामुत्पत्तिनिरूपणम्

**ईयस्.** ** medhi̯os* > Skt. *madhyas.* समग्रमिदं प्रातिपदिकं Comparative अर्थविशिष्टम् । पश्चात्तु तदेकदेशः *i̯os*

एव तथेति भ्रमः । स च परतस्तत्रैवार्थेऽन्यत्राप्युपयुक्तः । ततः पूर्वं इवर्णस्य योजने * *i-i̯os* > Skt. *i-yas* इति, तस्य दीर्घे च—ईयस् इति भवति ॥

**र** इत्ययं * *ro* प्रकृतिकः । यथा * *upe-ro* > Skt. *upa-ra*.

**तरप्** च * *dhero* प्रकृतिकः । यथा— * *n̥-dhero* > Skt. *a-dhara*. *a-dhara* इत्यस्य *dh* कारः इण्डोजर्मानिकाल एव *t* कारीभूतः । अत एव * *tero* प्रकृतिकोऽप्ययम् । यथा— * *en-tero* > Skt. *an-tara*. कचिच्च * *to, ro* इत्यनयोर्मेलनेनापि संस्कृते तर इति निष्पद्यते ॥

**इष्ठन्.** Skt. *varīyas*. * *i̯os* > Skt. *yas*. अस्य अपचयावस्था *is* इति. * *derke-to* > Skt. *darśa-ta*. पूर्वोक्त *is* इत्यस्य अत्रत्य *to* इत्यस्य च योगेन संस्कृते *iṣṭ(h)a* इति निष्पद्यते । * *nai̯disto* > Skt. *nediṣṭha*. *issimo* प्रकृतिकोऽप्ययं भवति ॥

**तमप्.** (1) *dek̑m̥-to* > *daśa-ta* (Ved.) * *upm̥mo* > Skt. *upama*. अत्र पूर्वत्रस्थितस्य *ta* कारस्य उत्तरत्र विद्यमानस्य *ma* कारस्य च योगेन निष्पद्यतेऽयम् ॥

(2) * *n̥-dhemo* > Skt. *a-dhama*. पूर्ववदत्रत्यस्य *dh* कारस्य *t* कारत्वेन विपरिणामेनाप्ययं निष्पद्यते । यथा—

* *entemo* > Skt. *antama*

(3) * *septm̥+mo* > Skt. *sapta-ma*. अत्रत्य *tm̥-mo* इत्यनयोर्मेलनेनापि तमप्रत्ययो निष्पद्यते । अयं च समानार्थक

Compound suffix इति ज्ञायते । यथा कतमप्रभृतयः । प्रथम इत्यत्र तु चतुर्थसादृश्येन थकारः । आङ्गलभाषायां तम-प्रत्ययसमानार्थकः *most* इति । तत्रापि प्रत्ययद्वयमेव ॥

त प्रत्ययः । अयं * *(derke)-to* प्रकृतिकः । श्रुतः स्तुतः शीतः इत्यादिषु केवलस्तप्रत्ययः. Diminutive रूपेण न्यूनार्थेऽप्ययमुपयुज्यते । यथा—देवता बन्धुता नम्रता । समूह (group) वाचकोऽपि कुत्रचित् ॥

म प्रत्ययः * *mo* प्रकृतिकः, *m̥* प्रकृतिकश्च । यथा— * *septm̥-mo*>Skt. *saptama*. यद्वा * *septm̥* इत्यत्र पूरणार्थ-कस्य *m̥* इत्यस्य द्वित्वे *septm̥m̥* इति भवति । ततश्चोत्तरत्र विद्य-मानस्य *m̥* कारस्य अकारात्मना पूर्वत्र विद्यमानस्य *m* कारात्मना च विपरिणामेन *ma* निष्पद्यते । सप्तम इत्यत्र विद्यमानपूरणार्थक-मप्रत्ययसादृश्येनैव इतरत्रापि मप्रत्ययः पूरणार्थे उपयुज्यते ॥

## ॥ असमाप्त्यर्थकाः प्रत्ययाः ॥

### Infinitive suffixes.

इमे च इण्डोजर्मानिक्भाषायां धातुभ्यः परं प्रयुक्ता यादृशान् शब्दान्निष्पादयन्ति स्म, Root-noun संज्ञकेभ्यस्ते-भ्योऽपि परतः द्वितीया-चतुर्थी-पञ्चमी-षष्ठी-सप्तमीविभक्तयो व्यवतिष्ठन्ते । अत्रेदं बोध्यम्—ऋग्वेदे ये तावत्प्रत्यया आधिक्ये-नोपलभ्यन्ते, न ते लौकिकसंस्कृते । लौकिके च येषामाधि-क्येनोपलम्भस्तेषु पञ्चैव ऋग्वेदे वर्तन्ते. Infinitive अर्थकः

Dative प्रत्ययः ऋग्वेदे अधिकः । ब्राह्मणेष्वयं दुर्लभः । लौकिकसंस्कृते नैवास्ति ॥

१. पूर्वोक्तेषु प्राथमिकः द्वितीयाविभक्तिप्रतिरूपको द्विधा निष्पद्यते— धातोरुपरि अम्प्रत्यययोगेन तुंप्रत्यययोगेन च । आद्यस्योदाहरणम्—समिधम् । ( अग्निं चलयितुम् ) ; शुभ्रम् (प्रकाशितुम् ) ; संपृच्छम् (प्रष्टुम् ) । द्वितीयस्य यथा—दातुं प्रष्टुं अत्तुं कर्तुम् ॥

२. द्वितीयश्चतुर्थीविभक्तिप्रतिरूपकः एकारे ऐकारे वा समाप्तिमुपेयात् । आद्यस्योदाहरणम्—भुवे (भवितुं); ज्योक्च सूर्यं दृशे (द्रष्टुं) ; वाचे (वक्तुं) ; भियसे (भेतुं) ; चक्षसे (ख्यातुं) ; युधये (योद्धुं) ; दृश्ये (द्रष्टुं); पीतये (पातुं); कर्तवे (कर्तुं); गन्तवे (गन्तुं) जीवातवे (जीवितुं); दामने (दातुं); विद्मने (वेत्तुं); दावने (दातुं) । द्वितीयस्य यथा — मन्तवै (मन्तुं) ; एतवै (एतुं); इत्यै (एतुं); पिबध्यै (पातुं); ह्वध्यै (ह्वातुं); गमध्यै (गन्तुं) ॥

३–४. तृतीयतुरीयौ पञ्चमीषष्ठीविभक्तिप्रतिरूपकौ असि तोसि वा समाप्तिमुपेयाताम् । आद्यस्योदाहरणम्—संपृचस् (संयोक्तुम् ) ; निमिषस् (निमेषितुं) । द्वितीयस्य यथा— गन्तोः (गन्तुं) ; कर्तोः ( कर्तुं, कुर्वन्नित्यपि) हन्तोः (हन्तुं, घ्नन्नित्यपि) अत्र शत्रर्थकत्वमपि ॥

५. अन्त्यः सप्तमीविभक्तिप्रतिरूपकः त्रिधा निष्पद्यते— १. धातोरुपरि इकारयोगेन । यथा—दृशि (द्रष्टुं); बुधि (बोद्धुं) । अत्रार्थस्य विपरिणामोऽप्यस्ति—दृष्ट्वा बुद्ध्वेत्यादि । २. धातोरुपरि

तरियोगेन। यथा—धर्तरि (धर्तुम्); कर्तरि (कर्तुं) ३. धातोरुपरि सनियोगेन । यथा—नेषणि (नेतुम्); गृणीषणि गातुम् ॥

तव्य प्रत्ययः । * *teu*, *io* इत्यनयोर्मेलनेन अयं प्रत्ययो निष्पद्यते । यथा कर्तव्यप्रभृतयः ॥

अकच् । क प्रत्ययस्य अकारान्तेन योगे पुनः प्रकृति-प्रत्ययविभागकाले भ्रमात्प्रकृत्यंशस्यावर्णस्यापि कप्रत्ययेन समभि-व्याहारादुत्पद्यतेऽयम् । यथा सर्वकः ॥

क प्रत्ययः । अयं * *qo* प्रकृतिकः । अयं च प्रत्ययः प्रथमतः स्वार्थे, ततस्तुल्यार्थे, ततोऽल्पार्थे, ततोऽनुकम्पायां, ततः प्राशस्त्ये चेति क्रमेण ववृधे । यथा अश्वकप्रभृतयः ॥

लक प्रत्ययः । अल्पार्थकोऽयं ल, क इत्यनयोर्मेलनेन निष्पन्नः । यथा—वृषलकप्रभृतयः ॥

यु प्रत्ययः । अयं च पायुरित्यत्र यकारान्तात् उप्रत्यययोगे ततः प्रकृतिप्रत्ययविभागकाले भ्रमात् यु इति विभागेन निष्पन्नः । यथा मृत्युः । अश्वयुः । प्रथमत इच्छार्थेऽयं प्रयुक्तः । यथा—सर्वस्युः । ततः पूजार्थे—यथा देवयुः । तत आचारार्थे—यथा वीरयुः ॥

तसिल् । पञ्चम्यर्थेऽयं विहितः । अयं च ततः इतः इत्यादिसर्वनामशब्देष्वेव पूर्वमुपयुक्तः । क्रमेण तु मुखत इत्या-दावन्यत्रापि । ततष्टादित्यादिप्रयोगदर्शनेन तसिलन्तादपि विभ-क्तिरासीदिति ज्ञायते । 'पितुर्गरीयान्पितृतो मातृतश्च । भयादंष्ट्रा-

* *dei̯k* > Skt. *dek* = give or show
* *es* > Skt. *s* = be (is)
* *i̯o* > Skt. *ya* = go
* *tod* > Skt. *ti* = he.
Skt. *dekṣyati.* = He is going to give (or show).

इदं च Agglutination, Composition or Coalescence theory इत्याख्यया व्यपदिष्टं मतं द्रढयति । आङ्गलभाषायामप्ययं समासो लक्ष्यते । यथा—*black-board ; black-bird ; grand-father ; grand-mother.*

अत्र अस्फुटसमासाः (obscure compounds) केचन वर्तन्ते । समस्तपदेषु इयान्प्रकृत्यंशः इयान्प्रत्ययांश इति निर्धारयितुं त्रयः सन्ति हेतवः—प्रकृत्यंशस्य स्फुटं प्रतीतिः, प्रत्ययांशस्य स्फुटं प्रतीतिः, एतादृशानुपूर्वीकस्य एतादृशोऽर्थ इत्यस्य स्फुटं प्रतीतिः । वक्ष्यमाणव्यतिरिक्तस्थलेषु एष्वन्यतमः स्यात् । वक्ष्यमाणस्थलेषु तु तदभावेन तानि Obscure compounds प्रच्छन्नसमस्तपदानीत्यभिधीयन्ते । यथा—

| | | | |
|---|---|---|---|
| 1. | *bhiṣak* | 4. | *viṁśati* |
| 2. | *nīḍa* | 5. | *śata* |
| 3. | *śvaśura* | 6. | *pīḍa.* |

१. एषु प्राथमिकः पूर्वं *abhi-ṣaj* इत्येवं स्थित्वा पश्चात् apharesis नियमेनावर्णस्यादौ विद्यमानस्य लोपे जस्य कुत्वे *bhiṣak* इत्येवं निष्पन्नः ।

२. द्वितीयस्तु **ni-sedo* इत्येवं स्थित्वा पश्चान्नीड इत्येवं क्रमेणोत्पन्नः । क्रमश्च प्राक्प्रतिपादितः ।

३. तृतीयस्तु * *sue-kuro* इत्येवं स्थित्वा श्वशुर इत्येवं पश्चान्निष्पन्नः ।

४. तुरीयस्तु * *duim-kmti* > Skt. *dvim-śati* इत्येवं स्थित्वा पश्चात् apharesis नियमेनाद्यस्य दकारस्य लोपे तादृशः संपन्नः । अस्य च द्विगुणितदशत्वसंख्याऽर्थः । वि इत्यस्य व्यवयवत्वादेव एतादृशोऽर्थो लभ्यते । आङ्गलभाषायामस्य *twenty* इति पर्यायपदम् । केचित्तु—विंशतिरित्यस्य इण्डोजर्मानिकभाषायां पूर्णा प्रकृतिर्न लक्ष्यते, शति इत्यस्यैव *kmti* इत्येवं सा लक्ष्यते । ततः पूर्ववर्तिनः कीदृशी प्रकृतिरिति न ज्ञायते, भाषान्तरेषु भिन्न-भिन्नत्वेन लक्ष्यमाणत्वात् । परं तु *uim* इति स्यादित्यभ्यूहः । अत्रत्यो वकारः उभौशब्दे विद्यमानस्य उवर्णस्य *im* इति अच्परकत्वेन व् इति विपरिणामाज्जातः । अत एव विंशतिरि-त्यस्य द्विगुणितदशत्वसंख्याऽर्थः । अथवा विषु इत्यत्र विद्यमानः विरेवायं स्यात् । तत्र विद्यमानस्य वि इत्यस्य द्वित्वार्थबोधकत्वेन पूर्वोक्तोऽर्थः संपद्यते—इत्यभिप्रयन्ति । त्रिंशत्सादृश्येन विंशदिति इकाररहितमप्यस्य रूपं भवति । पूरणार्थेऽयं विंश इति । विंशति-सादृश्येनैव त्रिंशत् चत्वारिंशत् इत्यादौ मकारः ।

५. पञ्चमस्तु दश-दश इत्येवं, दश-शत इत्येवं वा स्थित्वा पश्चात् शत इत्येवं निष्पन्नः । तत्राद्यो यथा—

* *dekm- dekm* > * *km-de* > * *km-te* > Skt. *śata.* दशगुणितदशत्वसंख्या अस्यार्थः । सूक्ष्मेक्षिकया पर्यालोचने

शतमित्यस्यापि दशत्वसंख्यैवार्थः । दृश्यते चायं विंशतिप्रभृतिषु । कालक्रमेण तु दशगुणितदशत्वमेव तस्यार्थ इति निश्चितः ॥

द्वितीयो यथा—

* _deḱm̥-ḱm̥to_ > * _(de)ḱm̥-(ḱm̥)to_ > * _ḱm̥ to_ > Skt. _śata_.

केचित्तु—मातृभाषायामस्य * _deḱm̥to_ इति प्रकृतिः । सा च Ablaut विपरिणामेन पूर्ववर्तिन एकारस्य, Aphaeresis नियमेन दकारस्य च लोपे संस्कृते तथा भवतीत्यभिप्रयन्ति । पूरणार्थेऽयं शततमः शतः इति ॥

६. षष्ठस्तु Idg. * _api-sedo_ इत्यस्मात्क्रमेण निष्पन्नः । * _api+sedo_ > * _pi+sdo_ > Pr. Ar. _pi-zda_ > Skt. _pīḍa_.

Jespersen तावत्सर्वानपीमान्विषयानुच्चैः परिजहास, विशिष्य च शतोत्पत्तिनिरुक्तिम् । केवलस्य मातृभाषास्थस्य * _ḱm̥tom_ पदस्यैव संस्कृते _śatam_ इति रूपसंभवे किमनेनोपहासास्पदेन अकाण्डताण्डवितेनेति तदाशयः ॥

Morphology रीत्या चतुर्धा भवन्ति समासाः—

- सुबन्तानां समासः, सुपो लुक् च ।
- अव्ययानां पदान्तरैः समासः (अव्ययीभावः) ।
- ये तावत्पूर्वं कालवाचका देशवाचका वा भूत्वा (Adverbs of time and place) पश्चात् उपसर्गाः (Prepositions) भवन्ति तेषां समासः । ते च विभक्तिप्रतिरूपकाः स्युः ।
- सुबन्तानां समासः, सुपोऽलुक् च (अलुक्समासः) ।

क्रमेणोदाहरणानि—

आद्यस्य यथा—

Skt. *rājapuruṣaḥ*; *unmanāh*; *yuktāśva*; *māndhātā.*

Skt. *dvipāt* *śatapāt* *nāvāja*

Lat. *bipes* *centipes* *navigo.*

द्वितीयस्य यथा—

Skt. *amṛtas* Lat. *amrotos* Eng. *ambrosia.*

Skt. *sāmikṛta* ; Skt. *anāptas* Lat. *ineptus* ;

Skt. *anaśva* ; Skt. *durmanas* Lat. *dusmenes.*

तृतीयस्य यथा—

Skt. *pratyakṣam* ; *atımātram.*

Skt. *apihitas* Lat. *epithatos.*

अत्रत्यापिः पूर्वं देशवाचकोऽभूत् ।

तुरीयस्य यथा—

Skt. *dvādaśa* Lat. *duodecim.* अत्र औस्थाने द्वित्वसंख्यावबोधकस्य आकारस्य श्रूयमाणत्वेन अलुक्समास एवायम् । यथा वा—

*trayodaśa* ; *dāsyāḥputra* ; *kaṇṭhekālaḥ* .
*śunaśśephaḥ* ; *yudhiṣṭhiraḥ* ; *vācamindhas*
*dūresrutas* ; *vācaṁyamas.*

पाणिनिस्तावत् कण्ठेकाल इत्येवमादिषु कुत्रचिदेवालुक्समासमङ्गीकरोति । द्वादश इत्यादिषु न । तत्र औकारस्थाने आकारो विहितः । एवं वनस्पतिः परस्परं अन्योन्यं इत्याद्यूह्यम् । एते च ब्रह्मणस्पतिसादृश्येन निष्पन्ना इति केचित् ॥

Semantic रीत्या समासाश्चतुर्धा भवन्ति । तादृशविभागे च भवन्ति नियामकाश्चत्वारः—

1. Subordination उत्तरपदार्थप्राधान्यं, तत्पुरुषे द्विगौ च ।
2. Co-ordination उभयपदार्थप्राधान्यं, द्वन्द्वे एकशेषे च ।
3. Epithetisation अन्यपदार्थप्राधान्यं, बहुव्रीहौ ।
4. Non-Epithetisation पूर्वपदार्थप्राधान्यं अव्ययीभावे कर्मधारयोऽप्यत्रान्तर्भवति ।

पाणिनिप्रोक्ताः सर्वेऽपि समासा यथायोगमेष्वन्तर्भवन्ति । आहुश्च वैयाकरणाः—'समासश्चतुर्धा इति प्रायोवादः' इति ॥

## ॥ तत्पुरुषः ॥

### Subordinate Compounds.

तत्पुरुषश्च Brugmann मतेन षोढा भवति—

१. समस्यमानानां नामपदत्वेन
२. पूर्वपदस्य द्वितीयाद्यन्तत्वेन
३. पूर्वपदस्य विशेषणवाचकत्वेन
४. पूर्वपदस्य संख्यावाचकत्वेन
५. समस्यमानानां विशेषणवाचकत्वेन
६. उत्तरपदस्य कृदन्तत्वेन—इति ॥

द्वितीयविभाग एव द्वितीयादितत्पुरुषाः सर्वेऽन्तर्भवन्ति ॥ क्रमेणोदाहरणानि—

| | | | | |
|---|---|---|---|---|
| 1. | Skt. | *rājarṣiḥ* | Gk. | *iatro-mantis* |
| 2. | " | *mātṛ-ṣvasar* | " | *patr-adelsos* |

3. Skt. *adharahanus* Lat. *plēni-lunium*
4. " *saptarṣayas* " *tri-noctium*
" *trirātram*
5. " *tāmra-dhūmras* Gk. *ochrō-xanthos*
6. " *vedavid* Lat. *jūdex* Eng. *judge.*

## ॥ द्वन्द्वः ॥

## Co-ordinate Compounds.

द्वन्द्वश्च न मातृभाषायामवस्थितः. Primitive Aryan भाषायां द्वन्द्वोऽयमासीन्न वेति निश्चयेन वक्तुं न शक्यते । पश्चात्तु Aryan भाषासु नूत्नतयोत्पन्नः । तत्रापि संस्कृतभाषायामेवास्याधिक्यम् । तत्र च वेदकालादनन्तरमेव महत्यस्याभिवृद्धिः संजाता । कथं तर्हि वेदे मातृभाषायां च द्वादशेत्यादि ? उच्यते । तत्र समास एव नास्ति । द्वित्वादिद्योतकाऽकारादीनां श्रूयमाणत्वेन व्यस्तान्येव तत्र पदानि । त्रयोदशेति निष्पत्तावयं क्रमः—

* *treịos-dekm̥ = treị-[(os-d) > (oz-d) > (od-d) > (ō-d)]-ekm̥*
> Skt. *trayodaśa.*

समासान्तरापेक्षया प्राधान्यं द्वन्द्वस्यैव, उभयपदार्थप्रधानत्वात् । 'अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च' इति भगवतो वचनमप्यस्योपष्टम्भकं भवति ॥

द्वन्द्वोत्पत्तौ च कारणद्वयमस्ति—

Juxtaposition. सुबन्तानां समुच्चित्योच्चारणम् । यथा धवखदिरौ । द्यौश्च पृथिवी च द्यावापृथिव्यौ, दिवस्पृथिव्यौ । द्यौश्च भूमिश्च द्यावाभूमी । द्यौश्च क्षमा च द्यावाक्षमे ॥

## ॥ बहुव्रीहिः ॥

Epithetised Compounds.

अत्र समस्यमानाः पदार्था अन्यपदार्थप्रधानाः । यथा—पीताम्बरादयः । अयं च सर्वास्वपि भाषासु लक्ष्यते । यथा—

| Idg. | Skt. | Gk. | Eng. |
| --- | --- | --- | --- |
| * *dusmenes* | *durmanas* | *dusmenēs* | *evil-minded* |

Eng. *red-coat*=one who wears a red coat.

## ॥ कर्मधारयः ॥

अत्र समस्यमानाः पदार्था न पूर्वत्रेवान्यपदार्थप्रधानाः । अस्मादेव बहुव्रीहिरुत्पन्न इति Brugmann अभिप्रैति । अत्र चोपष्टम्भकानि बहूनि सन्ति प्रमाणानि । पीतं च तत् अम्बरं च पीताम्बरं, पीतमम्बरं यस्य सः पीताम्बर इत्यादयः । 'न कर्मधारयान्मत्वर्थीयः' इत्यादिवैयाकरणोक्तिरप्येनं पक्षं कटाक्षयति । विरोधोऽप्यस्य क्वचन लक्ष्यते । यथा—बहुधन इति वक्तव्ये बहुधनीति प्रयुक्तं भगवता शेषेण । अयं च विरोधो न पूर्वोक्तस्य बाधक इति Brugmann आशयः ॥

पक्षमिमं Wackernagel नाङ्गीकरोति । बहुधनीत्यादिरूपदर्शनमेव मुख्यतयाऽत्र हेतुर्भवति. Appositional use नाम समानार्थकप्रयोगः । एतस्मादेव बहुव्रीह्युत्पत्तिः । संस्कृतेऽपि 'उरुः कक्षो न (इव) गाङ्ग्यः' 'देवास्त्वेन्द्रज्येष्ठाः' इत्येवं लक्ष्यते । पूर्वत्र बहुव्रीह्यर्थः । द्वितीये इन्द्रज्येष्ठा देवा इत्यर्थः । अतोऽस्मादेव तदुत्पत्तिरिति सोऽभिप्रैति ॥

Compounds
- Obscure compounds
- Clear compounds
  - Formational point of view
    - नाम
    - अव्यय
    - उपसर्ग
    - सुबन्त
  - Semantic point of view
    - Non-epithetised
      - १ २ ३ ४ ५ ६
      - Co-ordinate
        - १ २ ३ ४ ५ ६ ७
    - Epithetised

१. कर्मधारयः समानविभक्तिकः
२. तत्पुरुषः विभिन्नविभक्तिकः
३. कर्मधारयः विशेषणपूर्वपदकः
४. द्विगुः संख्यापूर्वकः
५. कर्मधारयः विशेषणोभयपदकः
६. उपपदसमासः (नाम, धातु, कृत्)

द्वन्द्वे १. उभयत्र समस्यमानपदयोः स्वरविभक्त्योः सद्भावः ।
२. अन्तिम एव नव्यविभक्तियोगः
३. प्रथमे स्वरलोपः
४. प्रथमे विभक्तेरपि लोपः
५. बहुवचनप्रत्यययोजनारम्भः
६. पञ्चमावस्थाया अभिवृद्धिः
७. समाहारैकत्वप्राप्त्या समासस्योन्नतदशाप्राप्तिः ॥

Macdonell तावत्समासमन्यथा विभजते । यथा—
1. Verbal compounds 2. Nominal compounds इति ।

प्राथमिके क्रियापदोपसर्गक्रियाविशेषणानां समासः । यथा—अरम् at hand, आविः openly. अन्यदूह्यम् ॥

द्वितीये तत्पुरुषादीनामन्तर्भावः । स च षोढा—

1. Co-ordinative compounds उभयपदार्थप्रधानो द्वन्द्वः ।
2. Determinative compounds उत्तरपदार्थप्रधानः तत्पुरुषः कर्मधारयश्च ।
3. Possessive compounds अन्यपदार्थप्रधानो बहुव्रीहिः ।
4. Governing compounds यत्रादौ Prepositions (उपसर्गाः) or verbal nouns (गच्छन्नित्यादयः) उत्तरत्र च सुबन्तानि । अत्रोत्तरपदार्थस्य पूर्वपदार्थोपसर्जनत्वम् ।
5. Syntactical compounds विरलविरलोऽयं वाक्यावयवघटितसमासः ।
6. Iterative compounds यत्र सुबन्तादीनां पुनरावृत्तिः ॥

१. आद्यो यथा—धवखदिरौ, रामकृष्णौ ।

२. द्वितीयो द्विविधः । यथा—

1. Dependent Determinatives
   तत्पुरुषः । यथा—राजपुरुषः शङ्कुलाखण्डः ।
2. Descriptive Determinatives.
   कर्मधारयः । यथा—पुरोहितः, पुनर्नवः, स्वायंभुवः ।

३. तृतीयो द्विधा—

1. कर्मधारय Possessives—समानाधिकरणबहुव्रीहिः

2. तत्पुरुष Possessives—व्यधिकरणबहुव्रीहिश्च । कर्मधारयस्य बहुव्रीहित्वेन विपरिणाम आद्यः । तत्पुरुषस्य तत्त्वेन विपरिणामो द्वितीयः । आद्यस्योदाहरणम्—पीताम्बरः, चित्रगुः । द्वितीयस्य यथा रायस्कामः, देवयोनिः इति ॥

४. तुरीयो द्विधा—निपातपूर्वकत्वेन कृदन्तपूर्वकत्वेन च । आद्यो यथा—अतिरात्रम् अनुकामम् ।

द्वितीयो यथा—तरद्वेषः, जमदग्निः (अग्निं गच्छति), भरद्वाजः । बहुव्रीहावयमन्तर्भावयितुं शक्यः ॥

५. पञ्चमो यथा—यद्राध्यम् । यावत्संपादनीयमित्यर्थः । येयजामहाः=ये यजामहे इत्यारभ्यमाणानि वाक्यानि ॥

६. षष्ठो यथा—मन्दं मन्दं, धावं धावं, खिन्नः खिन्नः ॥

अयं च भेदः सप्तधा भवति । यथा—

| | | |
|---|---|---|
| 1. Noun | यथा | अहरहः, दिवेदिवे |
| 2. Adjective | " | पन्यं पन्यं (पुनः पुनः स्तुत्यं) |
| 3. Pronoun | " | यद्यत् |
| 4. Number | " | पञ्च पञ्च |
| 5. Adverb | " | अद्याद्य (प्रतिदिनमित्यर्थः) |
| 6. Preposition | " | प्रप्र |
| 7. Verb | " | पिब पिब, गच्छ गच्छ ॥ |

Macdonell विमर्शकदृष्ट्या समासविभागः ।



समस्तपदपृथक्पदयोरपि न महान्भेदः। पृथक्पदेऽपि सूक्ष्मेक्षिकया पर्यालोचने वहुपदमेलनस्य विद्यमानत्वात्। यथा—

* *deik̂+es+i̯o+ti* > Skt. *dekṣyati.*

यथा वा—गुप् धातुः। अयं गो पा इति पदद्वयमेलनेन निष्पन्नः। आदावस्य पशुरक्षणमर्थः। ततः पालनसामान्यम्॥

*loudly, manly, likely* (may be), *kindly* इत्यादयोऽपि समस्ता एव। पूर्वमेते *loud-like, man-like* इति स्थित्वा पश्चात्क्रमेण इवार्थक *like* एकदेशभूतस्य *li* इत्यस्य *ly* इति विपरिणामे *ke* इत्यस्य लोपे चैवं जाताः॥

एवं बभूवेत्यादयोऽभ्यासयुक्ता लिडन्ता अपि समस्ता एव। आदिशब्देन चात्रैवंप्रकारका अन्येऽपि ग्राह्याः। यथा—

1. Desideratives जिगमिषतिप्रभृतयः सन्नन्ताः।
2. Frequentatives तोष्ट्रूयमानादयो यङन्ताः।
3. Causative aorists अचीकमतप्रभृतयश्चङन्ताः।
4. Intensives नित्यवीप्सयोर्द्विरुक्ता मन्दंमन्दंप्रभृतयः।
5. जुहोत्यादयश्च॥

आदावभ्यासोऽर्थविशेषद्योतनायारब्धः। स च नेदानींतनः, अपि तु मातृभाषाकालिकः। 'हे इन्द्र त्वं सोमं पिब पिब' इति वेदे, 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत' इति लौकिकसंस्कृते च दर्शनात्। पूर्वं पदस्यैव पुनरावृत्तिः, ततः प्रातिपदिकमात्रस्य, अथो धातुमात्रस्य इति क्रमेण एकाच्क एव स पर्यवसन्नः। सुप्तिङन्तरूपपदानां जायमानायाः पुनरावृत्तेः

Reduplicatio Integra इति नाम । पदैकदेशस्य प्रातिपदिकमात्रस्य धातुमात्रस्य वा जायमानायास्तस्याः Reduplicatio Mutila इति च । पदस्य पुनरावृत्तिर्यथा—दिवे दिवे, पिब पिब । एकदेशस्य यथा—मर्मरः घर्घरः शिशिर इति । क्रमश एकाच्कस्य यथा—रिरेच । अयं चाभ्यासस्तत्तत्स्थलविशेषेषु भिन्नभिन्नानर्थानवगमयति । यथा—पचति पचति, भुक्त्वा भुक्त्वा । आभीक्ष्ण्यमत्र द्योत्यते । वृक्षं वृक्षं इति वीप्सा । परि परि इति परिवर्जनम् । गतगतः इति पीडा । पटुपटुः इति सादृश्यम् । एवं बहुत्रास्यार्थभेदने सामर्थ्यमस्ति । बभूवेत्यादिष्वभ्यासो भूतकालावेदकः । एतेनाभ्यासस्य कालस्य च संबन्धः कश्चनास्ति इति विज्ञायते । अयं च संबन्धो नानादिसिद्धः । आह, वेद, इत्येवमादीनां लिङ्रूपाणां वर्तमानेऽपि दर्शनात् ॥

## ॥ शब्दाधिकारः ॥

शब्दनिर्वचनं (Declensions) द्विधा भवति—अजन्तहलन्तभेदेन (Vowel declensions and Consonant declensions). नामपदानां विशेषणानां चैतत्संभवति । तच्च प्रातिपदिकानां विभक्तीनां च मेलनेन । कृदन्तास्तद्धितान्ताः केवलाश्चार्थवन्तः शब्दाः प्रातिपदिकानि भवन्ति । आह हि भगवान् पाणिनिः—'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' 'कृत्तद्धितसमासाश्च' इति ॥

## ॥ विभक्तयः ॥

## CASES

मातृभाषायामारम्भावस्थायां बह्व्यो विभक्तय आसन् । चरमावस्थायां तु सप्त अष्टौ वा । ताश्च किंरूपाः किमर्थका इत्यादि विशिष्य न ज्ञातम् । भाषाशास्त्ररीत्या तासां तत्तद्भाषासु अवस्थानविषये परं किंचिज्ज्ञायते ।

१. संस्कृते सप्त विभक्तयः । या हि वैयाकरणैः स्वादि-प्रत्ययत्वेनाभिमन्यन्ते । इमा मातृभाषायामप्यासन् ।

२. ग्रीक्भाषायां तृतीया-सप्तमी-वर्जं पञ्चैव विभक्तयः । तयोश्चतुर्थ्या चारितार्थ्यम् ।

३. बाल्टिकूस्लवोनिक्भाषायां पञ्चमीवर्जं षड्विभक्तयः । तस्याः षष्ठ्या चारितार्थ्यम् ।

४. जर्मानिक्भाषायां प्रथमा द्वितीया चतुर्थी षष्ठी इति चतस्र एव विभक्तयः । इतरास्तु उपसर्गविधयाङ्गीकृताः ॥

संस्कृतभाषावस्थितासु विभक्तिषु काश्चन सर्वनामस्थानानी-त्युच्यन्ते । ताश्चानपुंसकाः सु औ जस् अम् औट् च । अपरा असर्वनामस्थानानि । यदाह पाणिनिः—'सुडनपुंसकस्य' इति । सर्वनामस्थानानां Strong cases इति नाम । असर्वनामस्था-नानां तु Middle cases इति । आस्वपि gradation भवति ॥

विभक्तयः कथं निष्पन्ना इति विषये इदं युक्ततरं भाति । पूर्वं विभक्त्यर्थवाचकानि पदान्येवासन् । तानि च कालान्तरे स्वावयवमात्रशेषाणि सन्ति प्रत्यया इत्यभिधीयन्ते । यथा—हस्ताविल्यादौ पूर्वं हस्त उभौ इत्येवमासीत्प्रयोगः । इदानीं तु हस्ताविल्येव । तेषामवयवा अपि सन्तो विभक्तयः 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति नयेन तत्तदर्थविशेषानवगमयन्ति । इमाश्च विभक्तयो वैयाकरणैरर्थानुसारेणैव कल्प्यन्ते, नाकारानुसारेण । भिन्नाकृतिका अप्यर्थैक्यादेकविभक्तित्वेन गण्यन्ते काश्चन । यथा—मत्यां मताविल्यादिषु आम् औ । एकानुपूर्वीका अपि अर्थभेदेन भिन्नविभक्तितया गण्यन्ते । यथा प्रथमाद्वितीययोर्द्विवचने औ । यथा च तृतीयापञ्चमीचतुर्थीषु द्विवचने भ्याम् । षष्ठीसप्तमीद्विवचनयोर्यथा ओस् । चतुर्थीपञ्चमीबहुवचनयोश्च यथा भ्यस् । संस्कृतभाषायां 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः' इति नियमभङ्गभिया कुत्रचित्स्थलेषु विभक्तीर्विधाय ततो भाषान्तरानुगुण्यसंपादनार्थमिव लोपं विदधाति पाणिनिः 'एङ्ह्रस्वात्संबुद्धेः' 'षड्भ्यो लुक्' इत्यादिना । तत्र स्थलेषु प्रकृतय एव अभिमतानर्थान्बोधयन्ति । उच्चैस् नीचैस् इत्यादिषु स् विभक्तेर्विद्यमानत्वेऽपि विभक्त्यर्थो न दृश्यते । उपसीत्यादौ सप्तम्यर्थबोधकप्रत्ययस्याभावेऽपि सोऽर्थ उपलभ्यते । अतो विज्ञायते भाषाया आरम्भकाले सुबर्थप्रतिपादनाय न सुप एव नियमेनापेक्षिता इति । 'विवक्षातः कारकाणि भवन्ति' इति वैयाकरणवादोऽप्यस्योपोद्बलक इति केचनाभिप्रयन्ति ॥

## ॥ लिङ्गानि ॥

## GENDERS

मातृभाषायामपि लिङ्गान्यासन् । आदौ नपुंसकलिङ्गमेवासीत् । तच्च Conceptional Neuter स्यात् इति केचित् ॥

अपरे त्वेवम् । प्राचीन आर्यन्-सेमिटिक्-भाषादिषु शाब्दलिङ्गानि वर्तन्ते । यतः मातृभाषायामपि तथैवेत्यनुमातुं पार्यते । शाब्दलिङ्गानां चरितं प्रति तु विद्यते विप्रतिपत्तिः शाब्दिकसमये । आर्यन्वंशे अन्यकालावच्छेदेन लिङ्गद्योतकाः प्रत्ययाः पार्थक्येन नावर्तन्त. Agglutinative भाषास्विव स्तनकेशलोमशत्वादिप्रयुक्तलौकिकलिङ्गप्रक्रियया अर्थगतमेव लिङ्गमासीत् । त्रिषु लिङ्गेषु सरूपाणां सर्वनाम्नां बुद्धिस्थतत्तद्व्यक्तिज्ञानेन यथा लिङ्गनिश्चितिः, तथैव नामवाचकशब्दानामपि । अनागरिको जनः प्रकृतिविषयान्सर्वानपि चेतनानेव प्रायशः पश्यतीति, नामवाचकशब्दान् तादृशचेतनलिङ्गानुगुणमेव तद्वाचकसर्वनामलिङ्गसदृशं व्यवहारेऽपि लिङ्गितान्करोति पुंस्त्वेन स्त्रीत्वेन चेति श्लिष्टमिव प्रतिभाति । तादृशलिङ्गनं च अन्ताविशेषेण ऋकारान्तेषु मातृपितृभ्रातृस्वस्रादिशब्देषु, ईकारान्तेषु सेनानीसुधीप्रभृतिशब्देषु, आकारान्तविश्वपादिशब्देषु चावश्याभ्युपेयमेव । तथैव ग्रीक्-लटिन् भाषयोः पुंवाचकत्वेनाभिमतौ *os*, *us* अन्तौ पूर्वं तादृशलिङ्गानवच्छेदकावास्ताम् । अतः इण्डोजर्मानिक्भाषासु सर्वत्रादौ शाब्दलिङ्गप्रक्रियाभाव ऊह्यते ॥

गलति काले क्रमशः लिङ्गफाकिकं शब्दनिकुरुम्बं परस्परव्यावृत्तं समजनि । तादृशशब्दानामन्तानि यदृच्छया तत्तल्लिङ्गबोधकत्वेन च पर्यकल्प्यन्त । नामवाचकशब्दाश्च *i, ia* कारान्ताः प्रथमतः स्त्रीव्यक्तिषु प्रयुज्यमानाः स्त्रीलिङ्गद्योतका बभूवुः, यदनन्तरमातिदेशिकस्वभावेन *i, ia* कारान्तशब्दाः प्रायशः स्त्रीलिङ्गत्वेन क्रोडीकृताः, *a, o* कारान्ताः पुनर्नामवाचकाः पुंलिङ्गत्वेनेति दिक् । एवं लौकिकमवयवसंस्थानप्रयुक्तालिङ्गं शब्दप्रपञ्चे शाब्दलिङ्गत्वेन (grammatical gender) संक्रान्तम् । सर्वनाम्नां पुनः तादृक्षता सिद्धैवेति प्रतिपादितमधस्तात् । एवं चेतनीकरणं प्रकृत्यंशानां साजात्यनियमोपोद्बलितं पदजालेषु लिङ्गद्वैविध्यमेव संपादयामास स्त्रीत्वेन पुंस्त्वेन वेति Semitic भाषासु अत्रैव विश्रान्तिः । आर्यन्भाषासु पुनः स्त्रीत्वपुंस्त्वानवच्छेदकान्यपि कानिचन पदानि शिष्यन्ते स्म । पदानां परस्परान्वयपरीक्षायां लिङ्गादिसामानाधिकरण्यनिबन्धनं नपुंसकमपि लिङ्गत्वेन व्याकरणे उद्बभूव । तथा च तादृशलिङ्गेषु शब्दा विभक्ता इति ॥

Brugmann विमर्शकस्तु—शाब्दलिङ्गस्य लौकिकलिङ्गस्य च न प्रयोज्यप्रयोजकभावः संबन्धः । स्त्रीव्यक्तिवाचकेष्वपि शब्देषु लिङ्गान्तरदर्शनात् । कथं पुनः प्रत्ययानां लिङ्गद्योतकता ? *mama* (माता), *gena* (नारी) इत्यादिषु स्त्रीवाचकानामकारान्तदर्शनात्तत्सादृश्येन तादृशान्तानां स्त्रीलिङ्गसंक्रान्तिः, *iē* or *i* कारान्तशब्दानां पुनः स्त्रीशब्दसाजात्येन * *u̯lqī* इत्यादाविव स्त्रीलिङ्गं स्यात्—इति । तत्कल्पमेव Bleek विमर्शकोऽप्यङ्गीचकार ॥

*a, i* कारान्तशब्दास्तावत्स्त्रीलिङ्गा एव वर्तन्ते, तत्साजात्येन तादृशान्तानि शब्दान्तराणीति Brugmann मतं न समीचीनमिव प्रतिभाति. *a, i* कारान्ताः शब्दा भूयिष्ठतया स्त्रीलिङ्गा इति प्रदर्शयितुं न पार्यते, येन तत्साजात्येन शब्दान्तराणि स्युरित्यध्यवसीयेत । किंच *a, i* कारान्ताः शब्दाः स्त्रीलिङ्गा इति वक्तुं न शक्यते, यावदन्यलिङ्गा अपि तदन्ताः शब्दाः परश्शतम् । इत्येवमादयो दोषाः सन्त्यत्रेत्यन्यत्र विस्तरः ॥

Jacobi पुनः सर्वनामतो लिङ्गसंभवं तर्कयति । तदर्थं च द्राविडीभाषातः संगानमपि क्रोडीकरोति । अत्रापि न किमप्यानुगत्यं वयमध्यक्षयामः । अतश्च लिङ्गचरित्रनिर्वचनमनिर्वचनीयमेवेति प्रतिभाति ॥

Otto Jespersen पुनः शाब्दलिङ्गसंभूतेरनिर्वचनीयतामभ्युपगच्छन् *i* कारान्तस्त्रीलिङ्गविषये एवमभिप्रैति. *i* कारः weak vowel, स्वल्प-दुर्बल-अबल-विलासिव्यक्तिषु संबद्धो दरीदृश्यते । यथा—*little, petit, piccolo, piccino, magy, kiss, we, tiny* (by children often pronounced *teeny*), *slim*, Lat. *minor, minimus* Gk. *mikros* Skt किंचित् ईषत् स्त्री—इत्येवमादिषु. *i* कारश्च क्षयिष्णोः प्रत्ययस्य शेषतया प्रतीयते । यथा—Eng *y=ie* (*bobby, baby, auntie, birdie*), Dutch *ie, je, koppie* (little hill) Goth. *ein—gumein* (little man) Eng. *kin, ling* Span. *ico-ito-illo*. तानवम् आबल्यं च प्रायेण स्त्रीधर्माविति *i*-कारश्च स्त्रीत्वद्योतकः

स्यात् । अत एव संस्कृतभाषायामपि *vṛkī, tanvī, naptrī* इत्यादावपि इकारः संगच्छत इति ङीबन्तेषु Jespersen मतस्य जातुचित्सांगत्येऽपि टाबाद्यन्तेषु तस्य खसूचित्वं निश्चप्रचम् ॥

पाणिनीयास्त्वत्र—

स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥

इत्येवमाद्यवयवसंस्थानविशेषनिबन्धनं स्त्रीपुंसयोर्लिङ्गं, तदभावे तदुभयोरन्तरं तन्नपुंसकमिति लक्षणलक्षितं लौकिकं लिङ्गम्। तदिदं शब्दशास्त्रे नोपयुज्यते, यतस्तस्याचेतने खट्वा-मालादौ बाधात् स्त्रीप्रत्ययानापत्तेः, दारानित्यादौ च 'तस्माच्छसो नः पुंसि' इति पुंलिङ्गद्योतकनत्वदर्शनाच्च । परं त्वत्र सत्त्वरजस्तमसां प्राकृतगुणानां वृद्धिः पुंस्त्वं, अपचयः स्त्रीत्वं, स्थितिमात्रं नपुंसकत्वमिति केचित् । अत एव उत्कर्षापकर्षसत्त्वेऽपि स्थितिमात्रमादाय सामान्ये नपुंसकमिति प्रवादः । उत्कर्षापकर्षसाम्यात्मकावस्थात्रयसाधारणं स्थितिमात्रं च केवलान्वयि। अयं पदार्थः, इयं व्यक्तिः, इदं वस्तु इति व्यवहारस्य सार्वत्रिकत्वात्। तच्चेदं लिङ्गमर्थनिष्ठमेव । यदाह भगवान्भाष्यकारः—एकार्थे शब्दान्यत्वात् दृष्टं लिङ्गान्यत्वमवयवान्यत्वाच्च । कैयटश्च—एकस्मिन्नेवार्थे पुष्यः तारका नक्षत्रं इति शब्दनानात्वदर्शनात् कुटीकुटीरादौ रेफाद्यवयवोपजनने लिङ्गभेददर्शनाच्च स्तनकेशाद्यतिरिक्तमेव लिङ्गमिति । पुंलिङ्गः शब्द इत्यादिव्यवहारस्तु वाच्यवाचकयोरभेदोपचाराद्बोध्यः ।

न च उपचयादिधर्माणां विरुद्धत्वादेकत्र समावेशायोगादेकस्य द्वित्रिलिङ्गतानापत्तिरिति वाच्यम् । एकैकस्मिन् वस्तुनि क्षणभेदेन त्रयाणामपि धर्माणां समावेशोपपत्तेः । उक्तं हि महाभाष्यकारैः—कश्चिदपि सत्त्वादिधर्मः कंचिन्मुहूर्तमपि नावतिष्ठते यावदनेन वर्धितव्यमपायेन वा युज्यते इति । न चैवं सति युगपत् द्वित्रिलिङ्गत्वानापत्तिरिति वाच्यम् । न हि व्यवहारे स्वसमानकालिकपदार्थसत्ता प्रयोजिका, भूतभविष्यव्यवहारोच्छेदापत्तेः । तत्र कश्चिच्छब्द एकलिङ्गविशिष्ट एवार्थे प्रयोज्यः, कश्चित्तु द्विलिङ्गे, कश्चित्तु त्रिलिङ्गे इत्यत्र लिङ्गानुशासनं प्रमाणम् । उक्तं च महाभाष्ये—अवश्यं तावत्कश्चित् स्वकृतान्त आस्थेयः—इति । स्वकृतान्तः वैयाकरणसिद्धान्त इत्यर्थः । तत्र टिघुभादिसंज्ञावत् लघुसंज्ञामकृत्वा महासंज्ञाकरणसामर्थ्यात्, सति संभवे स्तनकेशवतीत्यादि लौकिकं लिङ्गमप्यत्राश्रीयते । अन्यथा 'पशुना यजेत' इत्यत्र स्त्रीव्यक्तावपि सत्त्वाद्युपचयात्मकपुंस्त्वाद्यनपायात् 'आङो नास्त्रियां' इति नाभावस्याविरोधात् स्त्रीपशुरप्यालभ्येत । तदेतत्तुरीयस्य प्रथमपादे 'तथालिङ्गम्' इत्यत्र विचारितं भाट्टदीपिकायाम्—

भवतु संख्या शब्दार्थत्वाद्विवक्षिता, लिङ्गं तु उपादेयगतमपि अशब्दार्थत्वादविवक्षितम् । न हि तत्प्रातिपदिकार्थः, सिंहादिपदात्तदप्रतीतेः, तस्य लिङ्गत्रयसाधारण्येन लिङ्गविशेषव्यभिचाराच्च । नापि प्रत्ययार्थः, व्यभिचारादेव । नापि टावादीनां, सुब्विकाराणां 'तस्माच्छसो नः पुंसि' इत्यादीनां,

विलिङ्गे वृक्षादौ विपरीतलिङ्गे मक्षिकादौ च प्रयोगणे व्यभिचारादेव । अतः शब्दानुशासनमात्रमेवेदम । न लिङ्गं नाम कस्यचिच्छब्दस्यार्थ इत्यविवक्षितमिति प्राप्ते—

सिंहः सिंही इत्यादावनन्यथासिद्धलिङ्गप्रतीतेः लिङ्गमपि कचित् टाबादीनां सुब्विकाराणां च, कचिच्च तिसृचतस्रादिप्रातिपदिकविकाराणां वाच्यम् । अतश्च तत्कचित्संख्यावत् कचिच्च प्रातिपदिकार्थत्वेनैव विवक्षितम्—इति ॥

अत एव च संस्थानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः इति शाब्दिकैरेव तिरोभावाविर्भावलक्षणस्य लिङ्गस्य पारिभाषिकत्वं स्पष्टमुक्तमिति सोमनाथीये ॥

त्रिविधमपि तल्लिङ्गं जातिव्यक्तिवत् प्रातिपदिकार्थ एव । प्रत्ययार्थत्वे प्राधान्योपपत्तौ अजा, खट्वा, इत्यादौ स्त्रीत्वविशिष्टतादात्म्यावच्छिन्नाजादिबोधोऽनुभवसिद्धो विरुध्येत । किं च मातृस्वसृदुहितृगवादिशब्देषु विनापि टाबादिप्रत्ययं स्त्रीत्वविशिष्टार्थस्य बोधात् प्रातिपदिकस्य तत्र शक्त्यावश्यकत्वे टाबादीनामपि शक्तिकल्पने गौरवम् । 'ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः प्रावृड्विप्रुड्रुक्त्विषः' इत्यादिलिङ्गानुशासनसूत्राण्यपि प्रकृतिविषयाण्येव दृश्यन्ते । अत एव च 'कृदिकारादक्तिनः' इत्यत्र 'अक्तिनः' इत्येतदर्थवत् । अन्यथा क्तिनैव स्त्रीत्वस्योक्तत्वात् ङीपोऽप्राप्तेस्तद्वैयर्थ्यं स्पष्टमेव । न चैवमपि प्रकृत्यैव स्त्रीत्वस्योक्तत्वात्कथं टाबादय इति वाच्यम् । द्वावित्यादिवत् प्रकृत्युक्तस्याव्यावर्तकत्वात् । अन्यथा टाबादिविधिवैयर्थ्यात् ।

तथा च स्त्रीत्वमिह प्रातिपदिकस्यैव वाच्यं, टावादयस्तु तद्द्योतकाः। तथा च टावादिषु सत्सु अवश्यं स्त्रीत्वबोध इति नियमः, न तु टावादिषु सत्स्वेवेति नियमः—इति। एतत्सर्वं 'स्त्रियाम्' इति सूत्रे बालमनोरमायां स्पष्टं प्रपञ्चितम्॥

वस्तुतस्तु शाब्दलिङ्गमन्यत्, लोकलिङ्गमन्यत्। सत्यैकरूप्ये स्तान्नाम। अत एव 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इत्यभियुक्तोक्तिर्वर्वर्ति। तथा चैवमाहुराधुनिकशाब्दिकाः—

'Gender is a Syntactic category in such languages as Latin, French and German; the corresponding natural or notional category is sex: sex exists in the world of reality, but it is not always expressed in language, not even in those languages which, like Latin, French or German, have a system of grammatical genders which agree in many ways with the natural distinction of sexes.'—"It is better to keep sex and gender apart than to speak of 'natural and grammatical gender' as is often done." इत्यलं पल्लवितेन॥

## ॥ वचनानि ॥

## NUMBER

वचनानि च एकवचन-द्विवचन-बहुवचनानीति त्रिधा भवन्ति। मातृभाषायामप्येतान्यासन्। आङ्गलभाषायां द्विवचनं

नास्ति । अत्रेदं बोध्यम् । पूर्वं तावत् अक्षिपादबाह्वादिभ्यो द्वन्द्ववाचकेभ्य एव द्विवचनप्रत्यय आसीत् । यथा—अक्षिणी पादौ हस्तौ बाहू इति । न चैकेनैव अक्षिपादादिशब्देन कथमक्षिपादादियुगलं बोध्येत, कथं वा तन्निमित्तकास्तत्र ई ऊ औ प्रत्ययाः स्युरिति वाच्यम् । तेषामेव तद्बोधकत्वाभ्युपगमात् । तथाहि—पूर्वं ह्येते शब्दाः अक्षिअक्षिणी पादपादौ हस्तहस्तौ बाहुबाहू इत्येवमासन् । पश्चात्तु कालक्रमेण एकस्याक्ष्यादिशब्दस्य लोपेन अक्षिणी पादौ हस्तौ बाहू इत्येवं संजाताः । ततश्च 'यः शिष्यते' इति न्यायेन केवला एव ते शब्दाः तद्द्वितयं बोधयन्ति । तन्निमित्तका ई औ ऊ प्रत्ययाश्च । अत एव न काचिद्विमतिः ॥

केचित्तु अक्षिणी पादौ हस्तौ बाहू इत्येवमादयः शब्दाः स्वत एव स्वाभाविकद्वन्द्वपदार्थवाचकाः । पश्चात्तु Secretion theory रीत्या ई औ ऊ इत्यस्मिन्नंशे द्वित्वावबोधकत्वं परिकल्प्य ततोऽन्यत्रापि द्विवचनप्रत्ययत्वेन ते प्रयुक्ताः । यथा हरी वारिणी रामौ शंभू इत्यादिषु ॥

ईकार-औकार-ऊकाराणां यथा द्वित्वावबोधकत्वं तथा आकारस्यापि 'द्वा सुपर्णा सयुजा सखाया' 'मित्रावरुणौ' 'द्वादश' इत्यादिषु लक्ष्यते, रामाभ्यामित्यादौ च भकारस्य ॥

## ॥ प्रथमैकवचनम् ॥

* *a, e, o, i, ī, u, ū*— एतदन्तानां *s*. यथा—रामः हरिः वातप्रमीः शंभुः वधूः ॥

* *ā, i̯ā*—एतदन्तानां (Bare stem only). एभ्यो विहितस्य सोः श्रवणं न स्यात्. *i̯ā* इति ङीप्-ङीन्-ङीवन्तानां प्रातिपदिकानां ग्रहणम् । अत्रेदं बोध्यम. *ā, ī* कारयोः प्रकृत्यंशे सोः श्रवणं स्यात् । यथा— विश्वपाः हाहा लक्ष्मीः श्रीः । प्रत्ययांशत्वे तु श्रवणं न स्यात् । यथा— रमा गौरी इत्यादिषु ॥

* *r̥, l̥, n, r, s* —एभ्यो विहितस्य सोर्लोपः स्यात् । प्रकृत्यन्तस्य दीर्घश्च. (Stem-ending lengthened). यथा—पिता गमा राजा गीः दुर्मनाः ॥

Explosives स्पर्शाः—एतदन्तेभ्यो विहितस्य सोर्लोपः स्यात् । यथा—गुप् जलमुक् मरुत् ॥

Diphthongs—एतदन्तानां स्, न च तस्य लोपः । यथा सेः स्मृतोः राः नौः ॥

अदन्तनपुंसकशब्दानां प्रथमैकवचने म् प्रत्ययः । यथा—ज्ञानं धनं वनं फलं बलम् इत्यादि । अदन्तव्यतिरिक्तानां नपुंसकशब्दानां प्रथमैकवचने केवलप्रातिपदिकमेव । यथा—वारि मधु धाम कर्तृ । अदन्तनपुंसकशब्देषु प्रथमैकवचने मकारकल्पनं पुंलिङ्गद्वितीयाविभक्तिसादृश्येन । सादृश्यं चास्वातन्त्र्यप्रयुक्तम् । कर्तुरेव स्वातन्त्र्यं कर्मणस्तु नेति स्पष्टम् । पाणिनिरपि 'स्वतन्त्रः कर्ता' इत्येवं कर्तुरेव स्वातन्त्र्यं प्रतिपादयति । शब्दवाच्या हि कर्त्रवस्था (Active condition) कर्मावस्था (Passive condition) वा । नपुंसकशब्दाः (Neutrals or inanimates) अनयोर्द्वितीयेऽन्तर्भवन्ति ॥

## ॥ संबोधनप्रथमैकवचनम् ॥

संबुद्धिः संस्कृतभाषायामेव दृश्यते। भाषान्तरेषु प्रथमैकवचनमेव तदर्थप्रत्यायकम्। संस्कृतेऽपि एकवचन एव रूपभेदः। द्विवचनवहुवचनयोः प्रथमावदेव रूपे। अयं च क्रमः Indo-germanic कालादारभ्य आसीदिति विज्ञायते। यथा हे राम, हे हरे, हे शंभो। अत्र प्रयोज्यप्रयोजकयोः परस्पराभिमुखीभावेनैव तदर्थस्याभिव्यक्तिर्भवति। तत्र प्रथमाक्षरस्य सस्वरमुच्चारणात् संबुद्धिरिति व्यवह्रियते। 'वायविन्द्रश्च' इत्याद्यृचि संबुद्धावपि प्रथमैकवचनवद्रूपदर्शनेन आदौ संबुद्धावपि प्रथमैकवचनवदेव रूपमासीदिति विज्ञायते। कालक्रमेण तु प्रथमैकवचनतोऽस्य वैलक्षण्यसंपादनाय सुलोपः प्रववृते। अद्यापि संस्कृतभाषायां क्वचन स्थलेपूभयोरभेदो लक्ष्यते। यथा—विश्वपाः, हे विश्वपाः॥

## ॥ द्वितीयैकवचनम् ॥

अजन्तहलन्तशब्दयोरेकैव विभक्तिः *m̥* इति। सा अजन्तशब्दस्य पूर्ववृत्तित्वे संस्कृते *m* इति भवति। यथा—

* *u̯l̥qo+m̥=u̯l̥qom̥* > Skt. *vr̥ka+m=vr̥kam.*

हलन्तशब्दस्य पूर्ववृत्तित्वे *a* इति भवति। यथा—

* *mud+m̥* > Skt. *muda.* ततः अजन्तवृकादिशब्दसादृश्येन *m* कारे *mudam* इति भवति। यथा वा * *mud+m̥m̥* इति स्थिते *m̥* कारस्य द्वित्वे पूर्वं *m̥* कारस्य संस्कृते *a* इति उत्तर *m̥* कारस्य *m* इति विपरिणामे च *mudam* इति भवति।

पाणिनिस्तु हलन्तशब्दानां साधुत्वसिद्ध्यर्थं *am* द्वितीयैकवचन-प्रत्यय इत्याह। सोऽपि *m* कारस्य द्विवचनप्रत्ययत्वं, रामादिशब्देभ्यः *am* प्रत्यये सति 'अमि पूर्वः' इति सूत्रेण पूर्वरूपविधानेन भङ्ग्या प्रतिपादयति। अतो *m* प्रत्यय एव द्वितीयैकवचने तस्याप्यभिमत इति प्रतीयते. *m* कारस्य चास्य नादित आरभ्य कर्मार्थबोधकत्वं, नपुंसकलिङ्गे प्रथमैकवचनेऽपि तच्छ्रवणात्, तुभ्यम् अहं मह्यम् इत्यादिषु उच्चारणसौकर्याय तस्य Particle रूपेण दर्शनाच्च। अतः कालक्रमेणैव तस्य कर्मार्थबोधकत्वम् ॥

## ॥ तृतीयैकवचनम् ॥

इदन्तानां *ī*, उदन्तानां *ū*, इतरेषामजन्तानां, हलन्तानां च *ē* or *ō* > Skt. *ā* इति भवति ॥

Brugmann तावदस्य निर्वचनं दुर्वचमित्यभिप्रैति। संस्कृते भाषान्तरे च तृतीयैकवचने *bhi, mi* इत्यपि लक्ष्यते। *bhiḥ* इत्ययं, *bhi* इत्यस्माद्धेतुत्वावगमक-स्-प्रत्यययोगेन निष्पन्नः। सनेमि इति पदं वस्तुतस्तृतीयान्तम्। संस्कृते त्वद्य अव्ययत्वेन गण्यते। तत्र सन इत्ययमंशः प्रकृतिः, तस्याश्च प्राचीनमित्यर्थः। मिस्तु प्रत्ययः, तस्य च ततः प्रभृतीत्यर्थः। एवं प्राकृतेऽपि लक्ष्यते। तृतीयाबहुवचनेऽस्य सनेभिरिति रूपं दृश्यते। पञ्चम्येकवचनं तु सनत्सनादिति, सनत्कुमार, सनात्कुमार इत्यत्र विद्यमानम्। 'सना च होता च' इति वेदे लक्ष्यते। उदाहरणानि—

इदन्तस्य यथा—*agni+ī=agnī* (Ved.) तृतीयैकवचनम्। अग्निनेत्यर्थः ॥

उदन्तस्य यथा—*sūnu+ū=sūnū* (Ved.) तृतीयैक-वचनम् । सूनुनेत्यर्थः ॥

अग्निना हरिणा इत्यादिषु ना तु इन्नन्त-गुणिनासादृश्येन । एतत्सादृश्येनैव सूनुना शंभुनेत्यादिरपि ॥

अजन्तस्य यथा—* *u̯l̥qo+ē* or *ō* > Skt. वृका (Ved.) वृकेणेत्यर्थः । वृकेण इत्यत्र तु सर्वेण-सादृश्येन इना । स्त्रीलिङ्गे तृतीयैकवचने अश्वा इत्येव वेदेषु लक्ष्यते । संस्कृते Avestic भाषायां च तत्र अश्वया इति रूपम् । तया-सादृश्येन धिया इति । अत्र धी इत्यस्याः प्रकृतेः आप्रत्यये इयङादेशे धिया इति भवतीति पाणिनीया अभिप्रयन्ति । विमर्शकास्तु धिय् इत्यस्याः प्रकृतेराप्रत्यये तथा भवतीति ॥

## ॥ चतुर्थ्येकवचनम् ॥

सर्वेषां Tauto-syllabic *ai̯*. अदन्तानां परं तादृश *ai̯* प्रत्ययोपरि *e* अधिको योज्यः । स चात्र Postposition. विभक्तेः प्राक् पश्चान्मध्ये वा लक्ष्यमाणानां निरर्थकशब्दानां वर्णानां वा Postposition इति नाम । स्त्रीलिङ्गानामीदूदन्तानां Tauto-syllabic *āi̯* भवति । उदाहरणानि यथा—

* *marut+ai̯* > Skt. *marute*
* *u̯l̥qo+ai̯+e* > " *vr̥kāya*
* *gaurī+āi̯* > " *gauryai*
* *vedhū+āi̯* > " *vadhvai*
* *hari+ai̯+e* > " *haraye.* 'घेर्ङिति'

सर्वत्रात्र *e* कारः Adverb of place, संप्रदानस्य तथात्वात् । पूर्वमयं *e* कारः पृथक्पदत्वेनावस्थाय पश्चात्प्रत्ययः संवृत्तः । स्थितस्येदं गतिकल्पनम् । रमायै इत्यादिरूपं तु गौरीसादृश्येन ॥

## ॥ पञ्चम्येकवचनम् ॥

आदौ सर्वत्र सर्वेषां पञ्चमीषष्ठ्येकवचनयोरैक्यम् । अद्य तु हलन्तशब्दानामेव पञ्चम्येकवचने *es* or *os* इति षष्ठ्येकवचने इवास्ति । अजन्तानां तु पुंलिङ्गे तत्र *ēd* or *ōd* प्रत्ययो लक्ष्यते । यथा—

* *ụḷqo+ēd* or *ōd* > Skt. *vṛkād.*

Latin *meripod* इत्येवं पञ्चम्येकवचने *od* एव लक्ष्यते । सा च विभक्तिः सर्वनामशब्दादागतेति तर्क्यते । रमाया इति तु गौर्याःसादृश्येन ॥

## ॥ षष्ठ्येकवचनम् ॥

हलन्तानां *es* or *os* भवति. Latin भाषायां *es* दृश्यते । Greek भाषायां तु *os* लक्ष्यते । आर्यभाषायां तूभयमपि । तत्र च स्वरसहितस्य *es* प्रत्ययः, स्वररहितस्य *os* प्रत्यय इति केचित् । अजन्तानां तु पूर्वोक्तस्यापचयावस्था—*s* कारः । उदाहरणानि—

* *mud+es* or *os* > Skt. *mudas.*

* *ụḷqo+s* > Skt. *vṛkasya.* सर्वनामशब्दसादृश्येनात्र *ya* कारः. Latin भाषायां *lukoso* इति पर्यायपदम् । स्त्रीलिङ्ग-

शब्देषु षष्ठ्येकवचने मातृभाषायां वेदे च * *equ̯ās*, अश्वाः इत्येव लक्ष्यते । रमाया इत्यादौ गौर्याःसादृश्येन *ya* कारः । अयं च *ya* कारः आदन्तसप्तम्येकवचन एव प्रथमं प्रवृत्तः, ततस्तत्सादृश्येनान्यत्रापि । षष्ठ्येकवचने यदि यकारो न स्यात् तदा प्रथमाबहुवचनस्य षष्ठ्येकवचनस्य च भेदो न स्यात् । अतस्तत्संपादनाय आवश्यक एव षष्ठ्येकवचने *ya* कारः ॥

## ॥ सप्तम्येकवचनम् ॥

सर्वेषां *i* कारः । यथा— * *u̯l̥qo+i* > Skt. *vr̥ke*; * *mud+i* > Skt. *mudi.*

Diphthongs अन्तानामपि *i* कार एव । यथा—सयि स्मृतवि । इदन्तानामुदन्तानां च यथाक्रमं *ēi̯*, *ēu̯* सप्तम्येकवचनम् । क्वचित्तु *ēi̯* स्थाने *ē* कारो भवति । क्वचित्तु *ēu̯* भवति । यथा—

* *agni+ēi̯* (*ē*) > Ved. *agnā* (अग्नावित्यर्थः)

* *agni+ēi̯* (*ēu̯*) > Skt. *agnau.*

पत्यौ इत्यत्र पतौ इत्येव भवितव्ये तथा रूपं तु पत्यासादृश्येन । *ā*, *ī*, *ū* कारान्तेभ्यः परं सप्तम्येकवचने सर्वस्यांसादृश्येन *ām*. आदन्तेषु परं गौर्यांसादृश्येन *y* कारः । क्रमेण यथा—

*ramā+ām=ramāyām*
*gaurī+ām=gauryām*
*vadhū+ām=vadhvām.*

अत्रेदमवधेयम्. *n*, *r*, *s* एतदन्तेषु राज्ञि धातरि धनुषि इत्यादिषु क्वचित्स्थलेषु सप्तम्येकवचनस्य श्रूयमाणत्वेऽपि व्योमन्

अन्तर् इत्यादिषु तन्न श्रूयते। सप्तम्यर्थस्तु प्रकृत्यैव बोध्यते। यथा—ग्रीक्भाषायां प्रथमासप्तम्योस्तुल्यं रूपं—*domen* इति। यथा च इण्डोजर्मानिक्भाषायां * *mḷdhen* इति। तथैव च वेदे 'परमे व्योमन्' इति सप्तमी। केचित्तु व्योमन् मूर्धन् इत्यादौ विभक्तेर्विद्यमानत्वेऽपि निर्विभक्तिक इति पाणिनिर्वदति। व्योम्नीत्यत्र Indo-germanic भाषायां अन् इति सप्तमी विभक्तिर्दृश्यते। भाषान्तरेषु देशवाचकशब्दे अन्प्रत्ययस्य चतुर्थ्यन्तत्वं यथा तद्वदत्रापि सा सप्तमी विभक्तिरिति। प्रत्ययावयवेभ्यः *ā, ī, ū* वर्णेभ्यः सप्तम्येकवचने *ām* भवति। यथा पूर्वोक्ताः *ramāyām, gauryām, vadhvām* इत्यादयः। प्रकृत्यवयवेभ्यस्तु *i*. यथा विश्वपे धियि भुवि इति॥

## ॥ द्विवचनानि ॥
## DUALS.

अदन्तपुंलिङ्गानां प्रथमाद्वितीयाद्विवचनं तु Secretion theory रीत्या निष्पन्नः *au* औ. *a* वर्णश्च कुत्रचिद्भवति। यथा— Skt. *rāmau*; (Ved.) *vṛka*. सर्वत्र प्रथमाद्वितीयाद्विवचनयोरेकरूपतैव॥

इदन्तपुंलिङ्गानां *i* इति। यथा *harī*. सवर्णदीर्घः॥

उदन्तपुंलिङ्गानां Secretion theory रीत्या बाहुशब्दाद्विभक्तः *u* प्रत्ययः। यथा *śambhū*.

इतरेषामजन्तानां हलन्तानां च *au* औ। यथा—क्रोष्टारौ धातारौ गमलौ सयौ मुदौ जलमुचौ मरुतौ॥

नपुंसकादन्तानां स्त्रीलिङ्गादन्तानां च Tauto-syllabic *oi*. यथा—*jñāne, dhane, rame, ume.*

इदन्तानां क्लीवे नकारान्तसादृश्येन *nī*. यथा—वारिणी ॥

उदन्त-ऋदन्तानामपि तथा। यथा—*madhunī, kroṣṭunī, dhātṛṇī.*

*n, s*—अन्तानां *ī*. यथा—गुणिनी नाम्नी नामनी धनुषी मनसी ॥

तृतीयाचतुर्थीपञ्चमीद्विवचनम *bhyām.* उभौ-भ्यामादीनां प्रकृतित्वेन भकारविशिष्टः कश्चन शब्दः पूर्वमासीदित्यनुमीयते। ततो भकार एषु स्थलेषु द्विवचनप्रत्ययावयवत्वेनोपात्तः। यामिति तु पश्चाद्योजितः. *m* अत्र Particle इति Brugmann अभिप्रैति ॥

षष्ठीसप्तमीद्विवचनं सर्वेषां Tauto-syllabic *au* and *s*. यथा—* *ulqo+aus* > Skt. *vṛkayoḥ*. अदन्तेषु इदन्तसादृश्येन *y* कारः। * *mud+aus* > Skt. *mudoḥ*.

मातृभाषायामितरत्र च प्रथमाद्वितीयाद्विवचनयोरेकरूपत्वेऽपि तृतीयाचतुर्थीपञ्चमीद्विवचनानां षष्ठीसप्तमीद्विवचनयोश्च एकरूपत्वं नास्ति। अवस्तिक्भाषायां तथा इतरत्र च क्वचन विभिन्नतया दर्शनात। तथाहि—षष्ठीद्विवचने *o* प्रत्ययः सप्तम्यान्तु *a*. किंच तृतीयाचतुर्थीपञ्चमीद्विवचनानां नत्तद्भाषासु रूपैक्येऽपि भाषान्तरापेक्षया वैरूप्यदर्शनान्न तेषां मातृभाषायां समानरूपता ॥

## ॥ बहुवचनानि ॥
## PLURALS.

स्त्रीपुंसयोः सर्वेषां मातृभाषायां *es* or *os* > Skt. *as* बहुवचनप्रत्ययो भवति। यथा—*rāma+es* or *os* > Skt. *rāmās*. वेदे तु अयमेव द्विकृत्वः प्रयुक्तो लक्ष्यते। यथा—देवास् इति प्रथमाबहुवचनान्तात्पुनः *as* प्रत्यये देवासः इति। एवं जनासः ब्राह्मणासः॥

नपुंसकादन्तेषु तावत् *ā* प्रथमाबहुवचनम्। तच्च (Collective noun) समुदायवाचकमासीत्। बहुत्वार्थकमपि कचित्। तद्यथा वेदे—धृष्णवे दीयते धना, विश्वा भूतानि, सर्वा भूतानि, ज्ञाना। ज्ञानानि सर्वाणि विश्वानि भूतानि धनानि इत्यादिषु तु नकारान्तनपुंसकसादृश्येन नियोजितो नकारः। केचित्तु अत्रापि इदन्तादिष्विव *i* एव प्रत्ययः, नकारस्तु नान्तेभ्योऽतिदिश्यत इत्यभिप्रयन्ति॥

नकारान्तानां *i*. गुणीनि नामानि। अयं च प्रत्ययः कस्मादागत इति विशये Brugmann इत्थमभिप्रैति। तदिदमोः पूर्वं समभिव्याहार आसीत्। पश्चादिदंशब्दावयवेन *i* कारेण त इति प्रातिपदिकस्य संबन्धे गुणे च 'ते' इति रूपं भवति। तत्रत्य इकारो बहुत्वावगमक इति कृत्वा गुणीनि नामानि इत्यादावन्यत्रापि प्रयुक्तः। इतरेषामजन्तानामपि पूर्वोक्त एव *i* प्रत्ययः। यथा—*vārīṇi, madhūni, kartṝṇi.* नकारान्तसादृश्येन *n* अत्र संयोजितः। पूर्वोक्तं Brugmann मतं अपरे न

क्षमन्ते । यदि हि *i* कारः इदंशब्दावयवो बहुत्वावगमकः तदा *aśveṣu, teṣām* इत्यादौ तेनैव बहुत्वार्थस्य बोधनात् *su* इति *ām* इति च प्रत्ययान्तरयोजने किं मानं, अतो न तथा इति । *s* कारोऽपि क्वचन बहुत्वद्योतकः । तद्यथा—आङ्गलभाषायां *books, fruits.* Skt. *bhis, bhyas,* सर्वनाम *vaḥ* इत्यादावप्ययमेव *s* कारः ॥

## ॥ द्वितीयाबहुवचनम् ॥

मातृभाषायां *n̥s* इति । स चाजन्तशब्दस्य पूर्ववृत्तित्वे *ns* इति भवति । ततः *s* कारस्य लोपश्च भवति । तन्निमित्तकः Compensation नियमेन दीर्घश्च । यथा—

* *u̯l̥qo+n̥s* > Skt. *vr̥kān.*

हलन्तशब्दस्य पूर्ववृत्तित्वे तु *as* इति भवति । यथा—

* *mud+n̥s* > Skt. *mudaḥ. n̥s* प्रत्ययान्तत्वादेव *tāmstān* इत्यादौ *s* कारः श्रूयते । वैयाकरणास्तु तत्र सुडागमं विदधति । ईदूदन्तेषु गौर्याः वध्वाः इति भवितव्ये गौरीः वधूः इति रूपं रमासादृश्येन । नपुंसकलिङ्गे प्रथमावदेव रूपं द्वितीयायामपि. *yaśāmsi* इत्यादौ *s* कारः श्रूयते । प्रकृतिः *ns* विभक्त्या संयुज्यते । तथा च द्वितीयाबहुवचने प्रकृतिस्थ *ns* गतः *s* कारोऽनुवर्तते, प्रत्ययगतः *n* कारः पूर्ववर्तिनि *n* कारे संक्रम्य तस्यानुनासिक्यं संपाद्य अन्ततः अनुस्वारे पर्यवस्यति । 'नश्चापदान्तस्य झलि' । Compensatory नियमेन च पूर्वस्याकारस्य दीर्घः ॥

## ॥ तृतीयाबहुवचनम् ॥

सर्वेषां *bhis*. अत्र *bhi* इत्येकवचनम्, *s* इति बहुवचनम्। अनयोः समभिव्याहारे *bhis* इति भवति। यथा—*haribhiḥ*, *śambhubhiḥ*. अदन्तानां तु *bhis*, *oịs* च भवति। यथा—भद्रं कर्णेभिः, वृकेभिः (Ved.); रामैः ॥

## ॥ चतुर्थीपञ्चमीबहुवचनम् ॥

सर्वेषां *bhyas*. सर्वास्वपि भाषासु द्वयोस्तुल्यरूपतैव। एतेन इण्डोजर्मानिक्भाषायां एकैवानयोः प्रकृतिरिति ज्ञायते। भाषान्तरेषु *bhis* इत्येव लक्ष्यते। संस्कृते परं अकारो मध्ये संयोजितः—*bhyas* इति। यथा—*vṛkebhyaḥ*, *rāmebhyaḥ*. एषु सर्वनामसादृश्येन *e* कारो भवति ॥

## ॥ षष्ठीबहुवचनम् ॥

सर्वेषां इण्डोजर्मानिक्भाषायां *am* प्रत्ययः। (Ved.) *vṛkām*. *marutām* इत्यादौ दीर्घस्तु आदन्तसादृश्येन। स्त्रीलिङ्ग-वृकाणामित्यादौ वृका इत्याद्यादन्तद्वितीयैकवचनतो वैलक्षण्य-संपादनाय नान्तसादृश्येन *nām* योजितः। नान्तेषु *ātman*+*ām*=*ātmanām* इति रूपं भवति। अत्र *ām* इति दीर्घस्तु षष्ठ्यन्त *vṛkām* सादृश्येन। ततश्चादन्तेष्वपि अयं *nām* प्रत्ययः प्रयुक्तः। यथा—*rāmāṇām* इत्यादयः। दीर्घस्तु *ramāṇām* सादृश्येन ॥

## ॥ सप्तमीबहुवचनम् ॥

सर्वेषां (सु) *su.* यथा *rāmeṣu, ramāsu.* रामेषु इत्यादौ *e* कारः सर्वनामसादृश्येन. Slavonic भाषायां तु *chu* सप्तमीबहुवचनप्रत्ययः । उभयत्र *u* particle. वेदे *manassu* इत्यत्र *manasu* इति लक्ष्यते । यथा— अस्धातोः सिप्रत्यये *as+si* इति प्राप्ते *asi* इति एक एव सकारो लक्ष्यते तद्वदत्रापीति ज्ञायते. *nadīṣvā, martyeṣvā* इत्यादि वेदे अवस्तिकभाषायां च दृश्यते । तत्र प्रत्ययात्प्रत्ययान्तरनिष्पत्तिः । सा चार्यभाषासाधारणी ॥

## ॥ विभक्तिक्षयः ॥

### SYNCRETISM.

सर्वभाषासाधारणोऽयम् । अयं च द्विधा भवति—

1. Formal Syncretism 2. Functional Syncretism.

विभक्तिस्वरूपस्यैव लोपे विभक्तीनां तुल्यरूपत्वे वा प्रथमः । यथा—*he Rāma, pañca, ṣaṭ, vyoman* इत्यादयः ॥

उत्सर्गादेकस्य प्रत्ययस्य प्रसक्तौ प्रत्ययान्तरविधानेन प्रसक्तस्य लोपो द्वितीयः । यथा—उपपदविभक्त्या कारकविभक्तीनां बाधः । अधिशीङ्स्थासां कर्म । वैकुण्ठे अधिशेते इत्यस्य प्रतिनिधित्वेन वैकुण्ठमधिशेते । भृत्येन कारयतीत्यत्र भृत्यं कारयतीति । कारकविभक्तिषु च षष्ठी प्रबला । बहून्यस्योदाहरणानि । येषां प्रयोगबाहुल्यं तत्र Syncretism न्यायो विरलविरलः यथा—

अजन्तेष्वदन्ते, लिङ्गेषु पुंलिङ्गे, वचनेषु चैकवचने । एतदपेक्षया किंचिन्न्यूनप्रयोगत्वेन इदन्ताद्येकवचनेषु स्त्रीनपुंसकलिङ्गैकवचनेषु च किंचिदस्ति Syncretism. यथा—*hareḥ hareḥ* इति पञ्चमीषष्ठ्योः । एवं—शंभोः शंभोः; धातुः धातुः; गमुल् गमुल्; सयः सयः; गोः गोः; नावः नावः; ग्लावः ग्लावः; रमायाः रमायाः; लक्ष्म्याः लक्ष्म्याः ॥

प्रथमाद्वितीययोः—ज्ञानं ज्ञानं; वारि वारि; मधु मधु ॥

एतदपेक्षयापि किंचिन्न्यूनप्रयोगत्वेन स्त्रीबहुवचने नपुंसकबहुवचने हलन्तबहुवचने च Syncretism अधिकः । यथा—प्रथमाद्वितीयाबहुवचनयोः—रमाः रमाः; ज्ञानानि ज्ञानानि; मरुतः मरुतः ॥

चतुर्थीपञ्चम्योः—रमाभ्यः रमाभ्यः; ज्ञानेभ्यः ज्ञानेभ्यः; मरुद्भ्याम् मरुद्भ्याम् ॥

एतदपेक्षया किंचिन्न्यूनप्रयोगत्वेन द्विवचने सर्वत्र Syncretism अत्यधिकः । यथा—प्रथमाद्वितीयाद्विवचनयोः—रामौ रामौ; रमे रमे; धने धने ॥

तृतीयाचतुर्थीपञ्चमीद्विवचनेषु यथा—रामाभ्यां रामाभ्यां रामाभ्यां; रमाभ्यां रमाभ्यां रमाभ्यां; धनाभ्यां धनाभ्यां धनाभ्याम् ॥

Root-nouns संज्ञकेषु Ablaut विपरिणामो भवति त्रिधा । यथा—

1. Strong phase उपचयावस्था
2. Middle phase मध्यमावस्था
3. Week phase अपचयावस्था चेति ॥

क्रमेण यथा—

1. *rājan+s=rājā*
2. *rājan+bhis=rājabhis*
3. *rājan+ā=rājñā.*

एवं *hari+as=hare+as* इत्येवमादिरूपेण यत्र गुणो भवति तत्रापि Strong phase इति विभावनीयम् ॥

सुबुत्पत्तौ च प्रकारद्वयं वर्तते—

1. Declensional contamination
2. Metaplastic systems of declension.

१. तत्र स्वरूपपरित्यागेन स्वरूपान्तरमुपगच्छन्त आद्यस्य विषयाः । यथा—पतिशब्दः पतिना इति रूपं त्यक्त्व धात्रावत् पत्या इति, पतये इति रूपं त्यक्त्वा धात्रेवत् पत्ये इति पतेरिति रूपं त्यक्त्वा धातुर्वत् पत्युरिति ॥

२. स्वस्वरूपापरित्यागेन रूपान्तरमुपगच्छन्तः शब्दा द्वितीयस्य विषयाः । यथा—मतिशब्दः मत्यै इति रूपमपरित्यज्य मतये इति रूपान्तरमपि गृह्णाति । यथा च मत्याः इति रूपम परित्यज्य मतेरिति रूपान्तरम् । अत्र मत्या इति रूपं गौर्याः सादृश्येन । ईकारान्त-इकारान्तयोस्तृतीयैकवचने तुल्यरूपदर्श नात् । एवं सप्तम्यां मत्यामिति रूपमपरित्यज्य मतावि रूपान्तरं स्वीकरोति । एवमादिषु 'ङिति ह्रस्वश्च' इत्येवमादिसूत्रे

घिसंज्ञां विकल्पेन विदधाति पाणिनिः । धेनुश्रीशुच्यादयोऽप्यत्रै-वान्तर्भवन्ति ॥

भवच्छब्दो यदि शत्रन्तः तदा गच्छन्निव भवन्निति रूपं भवति । यदा तु सर्वनाम तदा भवानिति । मघवच्छब्दस्य मघवान् मघवन्तौ, मघवा मघवानौ इति रूपद्वयं *vant, van* or *an* इत्यनयोरुभयोः सादृश्येन । मघवानित्यत्र दीर्घो नान्त-सादृश्येन । भगवच्छब्दस्य संबुद्धौ *vant, vas* or *as* अनयोः सादृश्येन भगवन् भगवः इति । यथा—अधीहि भगव इति (Ved.)

*harivant harivaḥ; prataritvan prataritvaḥ.* अत्र *vant, vas* or *as* अनयोः सादृश्येन, तथा *van, vas* or *as* इत्यनयोश्च सादृश्येन क्रमादुभयत्र रूपे भवतः ॥

*vidvān.* इयमत्र प्रक्रिया. *vidvas+s; vidva+n+s; vidvān+s ; vidvān.* अत्र वन्नन्तमातरिश्वासादृश्येन दीर्घः । यथा वा अन्नन्तराजन्शब्दस्थराजासादृश्येन । तथा वन्तन्तसा-दृश्येन न् आगमो भवति । गच्छन्नित्यत्र यथा । हे विद्वन् विद्वद्भ्यामित्यादिरूपाण्यपि एतत्सादृश्येनैव ॥

वेदे महा इति किंचन रूपं लक्ष्यते । तद्बलात Vedic काले *mahan* इति कश्चन शब्द आसीदित्यनुमातुं शक्यते । अनुमि-तस्य तस्य संबुद्धौ महन्निति रूपम् । महच्छब्दस्यापि तत्र *mahan* इत्येव रूपं लक्ष्यते । अस्य च *mahan* शब्दसादृश्यमेव (Formal Analogy) अत्र हेतुः । अन्नन्तराजन्शब्दसादृश्येन वा । एवं Proportional Analogy नियमेन *mahān* इति रूपं भवति ।

तत्र वन्तन्तसादृश्येन नुम् । Vedic कालावस्थित *mahan* शब्दः तत्र गमकः । ततस्तत्सादृश्येन (by Logical Analogy) महान्तावित्यादिरूपाणि जायन्ते । तथाचात्र Analogy त्रयमप्यास्ते ॥

गरीयानित्यत्र *garīyan* इति, *garīyas* इति च प्रकृतिद्वयमासीत्. *garīyāṁsam* इत्यादौ *m* कारः नकारान्तगरीयान्सादृश्येन, *s* इति सकारान्तस्य । अत उभयोः भ्रमेण *garīyān, garīyāṁsau* इति Brugmann.

पथिन्शब्दे प्रथमैकवचनं आकारान्तवत्, ततश्चतुर्थ्येकवचनेऽन्नन्तवत्, इतरेषु इन्नन्तवत् । अतस्त्रयाणां तत्र विभ्रमः । अत एव सामान्यतो नकारान्त इत्याह पाणिनिः । वेदे पन्थानं पन्थां इति रूपद्वयदर्शनेन शब्दस्यास्य आदन्तत्वमूह्यते । पथ इत्यादीनि तु weak रूपाणि ॥

उदञ्च प्रत्यञ्च । संस्कृते अनयोर्द्वितीयस्य प्रथमैकवचने प्रत्यङ् इति रूपम् । अत्रत्य *y* कारस्य मातृभाषायां *ie* इति प्रकृतिः । अस्य weak form तु प्रतीचः प्रतीचा इत्यादयः । एतत्सादृश्येनैव उदीचः उदीचा इत्यादयः ॥

वसुन्धरः, वसुन्धरा इत्येवमादिषु नकारश्रवणं तु Ved. अरुन्तुदादिखशन्तसादृश्येन ॥

**उशनस्** । अत्र प्रथमैकवचने सकारान्तरूपमेकम् । यथा उशनाः । आकारान्तस्त्रीलिङ्गरूपमन्यत् । यथा – उशना । संबुद्धौ सान्तसादृश्येन एकं रूपम् । यथा—हे उशनः । अदन्तसादृश्ये-

मीकारो निष्पन्न इति न ज्ञातुं शक्यते । पूर्वे पूर्वाः इत्यादि-
दर्शनेन नामशब्देषु विद्यमानस्यास्प्रत्ययस्य सर्वनामशब्देष्वपि
क्रमोऽभूदिति ज्ञायते ॥

**तान्**, **तैः** । नामशब्दवदेव ॥

**तेभ्यः** । ते इत्यस्याः भ्यस्प्रत्यये तेभ्य इति रूपनिष्पत्तिः ॥

**तेषाम्** । षष्ठीबहुवचने सां प्रत्ययः । तस्य प्रथमाबहुव-
चनान्त-ते-शब्देन योगे तेषामिति भवति ॥

**तेषु** । ते इत्यस्मात् सु इत्यस्य योजने तेषु इति । इत-
रत्रापि सर्वनामशब्देषु अयमेव क्रमोऽनुसरणीयः ॥

**यत्** । य या इति प्रकृतिद्वयमस्य ॥

**एतत्** । एष इत्यस्य मातृभाषायां * *ei̯so*, *ei̯sos* इति
प्रकृतिद्वयम् । यथा—एष विष्णुः, एषः । सः, एषः, कः
इत्यादौ लक्ष्यमाणः स् प्रथमं नामशब्देष्वेवासीत् । कालक्रमेण तु
सर्वनामशब्देष्वपि संक्रान्त इति ज्ञायते । 'सैष दाशरथी रामः,
स शंभुः, एष विष्णुः' इत्यादौ सुरहितस्य रूपस्य दर्शनात् । अत
एव 'सैष दाशरथी राम' इत्यादिरूपसमर्थनाय 'सोऽचि लोपे
चेत्पादपूरणम्' 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इत्ये-
वमासूत्रयति पाणिनिः । त्यद् तद् यद् एतदादीनां नपुंसकलिङ्गेषु
स्वस्वरूपेणैवावस्थितिः ॥

**इदम्** । अस्य इद् इति प्रकृतिः, *it* (इत्) अवयवः *i*,
तदवयवः *d* इति केचित्. *i*, *da*, *m* इत्यंशत्रयमिति केचित् ।

त् *tāt* इत्येव रूपम् । अयमेव भवतात् इत्यादिलोट्स्थलेषु
ात्प्रयुक्तः । एतेन तस्मादिति रूपात्पूर्वं तादित्येव रूपमिति
ध्यति । तस्मिन्निति तु त इत्यस्मात् Particle स्म-संयोगे ततः
ाप्तमीप्रत्यये इकारसंयोगे पुनस्तदुपरि Particle न् संयोगे च
निष्पन्नः । पूर्वोक्तविपरिणामश्च Indo-germanic भाषायाः कालत
एवासीदिति ज्ञायते। अमुष्मै अमुष्मात् अमुष्मिन्नित्यादयः पूर्वोक्त-
तस्मै-तस्मात्-तस्मिन्-सादृश्येन । अमुष्यै अमुष्याः इत्यादयस्तु
तस्यै-तस्यास्सादृश्येन ॥

तस्य । मातृभाषायां षष्ठ्येकवचने * *sio, s* इत्येवं प्रत्ययद्वितयं लक्ष्यते । संस्कृते तु आद्यः *sya* भवति । तस्य च त इत्यनया प्रकृत्या साकं संयोगे तस्येति भवति । *s* प्रत्ययः प्राकृत एवोपयुज्यते । यथा—तस्स ॥

तस्याः । स्त्रीलिङ्गे षष्ठ्येकवचने स्याः इति प्रत्ययः । स्य इत्यस्मात्कालक्रमेण अस्प्रत्ययसंयोगे स्याः इत्यभूत् । ततस्तु पुंन- उताहो सर्वलिङ्गेषु तस्य इत्येवमेव पूर्वं रूपमासीत् । ततस्तु पुंन-पुंसकलिङ्गाभ्यां स्त्रीलिङ्गस्य वैलक्षण्यं संपादयितुं अस् प्रयुक्त इति बोध्यम् । इमं च क्रमं कालक्रमेण विस्मृत्य स्त्रीलिङ्गस्य स्य प्रत्यय इति कृत्वा, तस्यै तस्यां इत्यादावप्युपयुक्तः । पूर्वोक्तस्यप्रत्ययश्च कालक्रमेण रामस्येत्यादिनामशब्देभ्योऽपि प्रयुक्तः ॥

तौ, ते । त इत्यस्याः प्रकृतेरावादीनां द्विवचनप्रत्यया योजने रामादिशब्देष्विव अत्रापि रूपं भवति । इदंशब्दाव वस्य इवर्णस्य त इत्यस्माद्योजने ते इति भवति । अमी इ

अत्रत्य *m* नामशब्दादागतः. *cid* इत्यत्र विद्यमानस्य *ci* इत्यस्यापि * *qi* प्रकृतिः । पूर्वोक्तनयेन *kim* इत्यत्रापि Palatalisation नियमेन *cim* इति भवितव्ये *kim* इति रूपं *kaḥ* इति सादृश्येन । काचिदित्यत्र विद्यमानस्य *kā* इत्यस्य * *qō* प्रकृतिः । कश्चित् काचित् इत्यादयः Indefinite pronouns. किंशब्दस्य एवमनेकप्रकृतिकत्वकल्पनापेक्षया लाघवात्पाणिनीयमतानुसारेण एकैव प्रकृतिः, तस्यैवेतरे आदेशाः इति तु न शक्यते वक्तुम् । भाषान्तरानुगुण्येन अनेकप्रकृतिकस्यैवाभ्युपगन्तव्यत्वात् । कुत्र इत्यादौ * *qu* प्रकृतिः ॥

## ॥ अलिङ्गाः सर्वनामशब्दाः ॥

Pronouns without gender.

**युष्मदस्मदौ** । अनयोरपि न प्रत्येकमेकैव प्रकृतिः । अहं, त्वं, आवां नौ, युवां वां, वयं, यूयं, मां मा, त्वां त्वा, अस्मान् नः, युष्मान् वः इत्येवमादिना विभिन्नरूपदर्शनात् । मे ते इत्येकरूपस्यैवानेकविभक्तिकत्वं च लक्ष्यते ॥

**अहं** । अत्र * *eĝh*, *am* इत्यंशद्वयं, तत्र *am* Particle. केचित्तु *eγ*, *am* इत्येवांशद्वयं, तत्र *am* Particle इति ॥

**आवां** । अत्रत्य *ā* कारः * *ŋe* प्रकृतिकः. * *ŋe* इत्यत्र विद्यमानस्य *ŋ* इत्यस्य *e* इत्यस्य च Skt. *a* इति विपरिणामे ततः सवर्णदीर्घे च *ā* इति निष्पद्यते । ततः Particle *am* समभिव्याहारे *ām* इत्येव भवितव्ये *āvām* इति *yuvām* सादृश्येन । अयं द्वितीयाद्विवचनेऽप्यर्थान्तर उपयुज्यते ॥

अत्र प्रथमैकवचनं वर्जयित्वा इम इत्यस्ति । तत्र *ei̯* इत्यतः *i*, अस्मच्छब्दाच्च *m* आगतः, समीपस्थः पदार्थोऽस्यार्थः । अत एव एनेनेति रूपदर्शनमिति च Brugmann अभिप्रैति । अनेनेत्यस्य * *eno*, *ena* इति प्रकृतिद्वयमासीत् ॥

**अयम्** । अत्र * *oi̯* प्रकृतिः, *am* Particle. तयोर्मेलनेन अयमिति निष्पन्नः । अयंशब्दे * *o* प्रकृतिः, तस्याः Particle *am* समभिव्याहारे *ām* इति भवितव्ये मध्ये सौकर्याय * *i̯* > Skt. *y* वर्णः संयुज्यते । स्वयमित्यत्राप्येवमेवेति केचित् । आधुनिकविमर्शकदृष्ट्या अयंशब्दोऽन्यः इदंशब्दश्चान्य इति भिन्नप्रकृतिकत्वेन विज्ञायते । पाणिनीयास्तु अर्थैक्यात् एकैव प्रकृतिरिति वदन्ति ॥

**इयम्** । * *i* प्रकृत्या साकं Particle *am* समभिव्याहारे उच्चारणसौकर्याय *i̯* (*y*) कारप्रश्लेषे च इयमिति निष्पद्यते ॥

**अदस्, असौ** । अत्र *a*, *sa*, Particle *u* इत्यंशत्रयमस्ति । एषां मेलनेनैव *asau* निष्पद्यते । केचित्तु प्रथमैकवचने *as*, *a* इति प्रकृतिद्वयं, ततः particle *u* प्रत्ययसंयोगे *asau* निष्पद्यत इत्यभिप्रयन्ति । तत्र அது अवयवः अ, तदवयवः *sa*, निरर्थको दूरार्थको वा *u* । पूर्वमते *sa* इत्यस्य प्रथमपुरुषे அவன் अर्थः । इतरौ तु दूरार्थकावव्ययौ । तथाच असौ इत्यस्य yonder; that—दूरे विद्यमान इत्यर्थः ॥

**किम्** । अस्य * *qo*, *qi*, *qu* इति प्रकृतित्रितयमस्ति । *kaḥ* इत्यादौ * *qo* प्रकृतिः । *kim* इत्यादौ * *qi* प्रकृतिः ।

**अस्माभिः** । * *a* इत्यस्याः प्रकृतेः *sma* योगे तदुपरि *bhis* योगे च *asmābhiḥ* इति । सर्वाभिः-सादृश्येन दीर्घः ॥

**मह्यं** । * *mo* इत्यस्याः प्रकृतेः *ghi* इत्यस्य, ततः *am* प्रत्ययस्य च योगे *mahyam* इति भवति ॥

**मे** । अयं * *mei* प्रकृतिकः । केचित्तु * *eme* इत्यस्य Ablaut अज्विपरिणामेन *me* इत्यभिप्रयन्ति । षष्ठ्येकवचनेऽप्ययमेवार्थान्तरेऽप्युपयुज्यते ॥

**अस्मभ्यम्** । * *a* इत्यस्याः प्रकृतेः *sma* योगे ततश्च *bhy* योगे ततश्च *am* प्रत्यययोगे *asmabhyam* इति भवति ॥

**मत्** । * *me* इत्यस्याः प्रकृतेः *t* इत्यस्य योगे *mat* इति भवति । अयं Bare stem इति केचित ॥

**अस्मत्** । * *a* इत्यस्याः प्रकृतेः *sma* योगे, ततः *t* योगे च *asmat*. अयमपि Bare stem इति केचित् ॥

**मम** । * *me* इत्यस्याः द्वित्वेन संस्कृते *mama* इति ॥

**आवयोः** । * *āue* इत्यस्याः प्रकृतेः *os* प्रत्यययोगे संस्कृते नामशब्दवत् *āvayoḥ* इति भवति ॥

**अस्माकम्** । * *a* इत्यस्याः प्रकृतेः *sma* प्रत्यययोगे ततः कप्रत्यययोगे Particle *am* योगे च *asmākam* इति भवति । दीर्घस्त्वस्माभिस्सादृश्येन । अयं च पूर्वं Adjective, ततस्तु अस्मच्छब्दस्य षष्ठीबहुवचनत्वेन कल्पितः । एवं **युष्माकम्** ॥

**मयि** । * *me* इत्यस्याः प्रकृतेः सप्तम्येकवचन *i* प्रत्यये अयादेशे च *mayi* इति ॥

**वयं** । अत्रत्य *va* कारः मातृभाषास्थ * *ue* or *uo* प्रकृ-
कः । ततः Particle *am* समभिव्याहारे *vām* इति भवितव्ये
सूच्चारणाय मध्ये *i* (*y*) इत्येवं प्रश्लेषेण *vayam* इति भवति ॥

**मां** । * *mō* इति द्वितीयैकवचनप्रकृतेः क्रमात् Particle
*am* समभिव्याहारे Skt. *mām* इति भवति ॥

**मा** । अयं * *mō* प्रकृतिकः । केचित्तु इण्डोजर्मानिक्
भाषायां *mé*, *me* इति सस्वरो निःस्वरश्चेति शब्दद्वयमस्ति,
तत्र सस्वरः Skt. *mā* इत्येवं निःस्वरो निष्पद्यते, *mām* इति
तु पश्चात्कल्पित इत्यभिप्रयन्ति. *mā*—Bare stem.

**नौ** । * *ne* or *no* प्रकृत्या साकं द्वित्वद्योतक *u*
प्रत्ययसंयोगे संस्कृते *nau* इति निष्पद्यते । षष्ठीसप्तम्योर्द्विवच-
नेऽप्ययमेवार्थान्तर उपयुज्यते ॥

**अस्मान्** । * *n̥* इत्यस्मात् *sma* प्रत्यययोगे ततश्च रामा-
न्नित्यादिनामशब्दसादृश्येन *ān* प्रत्यययोगे *asmān* इति ॥

**नः** । * *nes* or *nos* प्रकृतिकः । केचित्तु मातृभाषायां
* *nós*, *nos* इत्येवं प्रकृतिद्वयं, तत्र सस्वरः संस्कृते *nas* इति
निःस्वरो भवति, *asmān* इति तु पश्चात्कल्पित इत्यभिप्रयन्ति ।
षष्ठीचतुर्थीबहुवचनयोरप्ययमेवार्थान्तरेऽप्युपयुज्यते ॥

**मया** । * *ma* इत्यस्याः प्रकृतेस्तृतीयैकवचन *ā* प्रत्यययोगे
*mā* इति भवितव्ये मयि-सादृश्येन मया । वेदे तु *mā*
इत्येव लक्ष्यते ॥

**आवाभ्यां** । * *āvā* (प्रकृतिः) + *bhyām* (प्रत्ययः). ॥

त्वया । * *tue* इत्यस्यास्तृतीयैकवचन *ā* प्रत्यये त्वयि-सादृश्येन *ya* कारे च *tvayā* इति भवति ॥

युवाभ्याम् । * *iuuē* (प्रकृतिः) + *bhyām* (Particle).

युष्माभिः । * *iu* इत्यस्मात् *sma* प्रत्यययोगे *bhis* प्रत्यययोगे च *yuṣmābhis* इति । दीर्घस्तु सर्वाभिस्सादृश्येन ॥

तुभ्यम् । * *tu* + *bhy* + *am.*

ते । * *tei* संस्कृते ते इति भवति । अयमेव षष्ठ्येकवचनेऽप्यर्थान्तर उपयुज्यते ॥

युष्मभ्यम् । * *iu* + *sma* + *bhy* + *am.*

त्वत् । * *tue*+*t.* अयं Bare stem इति केचित् ॥

युष्मत् । * *iu* + *sma* + *t.* अयं Bare stem इति केचित् ॥

तव । * *teuo* प्रकृतिकः । अयं Bare stem.

युवयोः । * *iuue* इत्यस्याः *os* प्रत्यये नामशब्दवत् *yuvayoḥ* इति ॥

युष्माकम् । * *iu* इत्यस्याः *sma* प्रत्यययोगे ततः क्रमेण *ka, am* प्रत्यययोगे युष्माभिस्सादृश्येन दीर्घे च रूपम् ॥

त्वयि । * *tue* इत्यस्याः सप्तम्येकवचन *i* प्रत्यये अयादेशे च त्वयि इति ॥

युष्मासु । * *iu* इत्यस्याः *sma* योगे ततः सप्तमीबहुवचन *su* प्रत्यययोगे युष्माभिस्सादृश्येन दीर्घे च *yuṣmāsu* इति । सर्वत्रात्र *sma* प्रत्यययोगः *tasmin, tasmāt* सादृश्येन ॥

अस्मासु । * a + sma + su (सप्तमीबहुवचनं) ।

...र्घस्त्वस्माभिस्सादृश्येन ॥

त्वम् । * tue (प्रकृतिः) + Particle m.

युवाम् । * iuu इत्यस्याः प्रकृतेः am प्रत्यययोगे संस्कृते युवां इति । दीर्घस्तु आवां-सादृश्येन ॥

यूयम् । * iu इत्यस्याः प्रकृतेः Particle am योगे वयं-सादृश्येन ya कारे च yūyam इति भवति. Avestic yous Gothic jus इत्यादिभाषान्तरपर्यालोचनया तु yūyam इत्यत्रापि * iūs प्रकृतिरिति ज्ञायते । ततश्च am प्रत्यययोगे yūṣam इति भवितव्ये yūyam इति vayam सादृश्येनैव. yū इत्यत्र दीर्घस्तु इण्डोजर्मानिककालादारभ्यैव लक्ष्यते ॥

त्वाम् । * tuē इत्यस्मात् am प्रत्यये Skt. tvām इति ॥

त्वा । अयं * tuē प्रकृतिकः । केचित्तु मातृभाषायां tuē, tue इति च प्रकृतिद्वयं लक्ष्यते, तत्र सस्वरः tvā इत्येवं संस्कृते निःस्वरो भवति, tvām इति तु पश्चात्कल्पित इत्याहुः । त्वा इत्ययं Bare stem इति केचित् ॥

वाम् । * tuē इत्यस्मात् Particle am योगे संस्कृते vām. षष्ठीचतुर्थीद्विवचनयोरपि अर्थान्तरेऽयमुपयुज्यते ॥

युष्मान् । * iu इत्यस्याः प्रकृतेः sma प्रत्यययोगे ततो नामशब्दसादृश्येन ān योगे च yuṣmān इति ॥

वः । * ue इत्यस्य बहुवचन s प्रत्यययोगे संस्कृते vaḥ इति । अयमेव षष्ठीचतुर्थीबहुवचनयोरप्यर्थान्तर उपयुज्यते ।

अत्र तम् तेन इत्यादय आद्यस्योदाहरणम्, रामान् इत्यादयो द्वितीयस्य ॥

सुब्विभक्तिषु धातूनामन्यपदानां च ह्यंशतया प्रवेशोऽपि क्वचन लक्ष्यते। चक्रमित्यत्र धातोः ह्यंशतया प्रवेशः। तथाहि—क्रमुधातोर्द्वित्वे चक्रमिति भवति। तत्रत्यमकार एव अधुना विभक्तित्वेन गण्यते। अयमेव नपुंसकप्रथमाद्वितीयैकवचनयोः क्रमात्प्रयुक्तः। तमित्यादावप्ययमेव। स्वाभाविकद्वन्द्वपदार्थवाचकानां अक्षिणी-हस्तौ-बाहूप्रभृतीनां हरी वारिणी रामौ शम्भू इत्यादिप्रथमाद्वितीयाद्विवचनयोरंशतया प्रवेशः। नौ इत्यत्र उभौशब्दस्य। रामाभ्यामित्यादिद्विवचनेषु उभौशब्दस्य तत्प्रकृतिभूतस्य वा कस्यचन शब्दस्यांशतया प्रवेशः। ते वारिणी इत्यादौ इदंशब्दस्यांशतया प्रवेशः। सर्वा भूतानि विश्वा भूतानि इत्यादिषु विद्यमानसर्वा-विश्वा-इत्यादिबहुवचनान्तेषु सभाशब्दस्यांशतया प्रवेशः। रमाणां मधूनि हरिणा इत्यादिषु नान्तशब्दानामंशतया प्रवेशः। तेन इत्यत्र न इत्यव्ययस्यांशतया प्रवेशः ॥

एवं प्रातिपदिकेष्वपि अन्यपदानामंशतया प्रवेशो लक्ष्यते। तथाहि—*amā* इत्यस्य रमा इत्यादौ, स्त्री इत्यस्य गौरी इत्यादौ, वधूशब्दस्य कुरूः इत्यादौ अंशतया प्रवेशः ॥

तिङि विकरणेषु च धातूनामंशतया प्रवेशो यथा—अस् धातोः याधातोश्च क्रमात् सिप्प्रत्यये स्यप्रत्यये च। अन्यत्राप्येवमेव अंशतया प्रवेशः सुधीभिर्विभावनीयः ॥

मदीय त्वदीय इत्यादि रूपं तु पञ्चम्यन्तात् *iya* प्रत्यये निष्पद्यते । त्वत्तः मत्तः इति तु पञ्चम्यन्तात् तसिल्प्रत्यययोगे । तव मम इत्यस्मात् कप्रत्यये तवक ममक इति भवति ॥

## ॥ नामसर्वनामशब्दानां परस्परवैलक्षण्यम् ॥

सर्वनामविभक्तयो नामशब्दविभक्तिभ्यो भिन्नाः । एकैकस्यापि शुद्धस्य शब्दस्य बह्व्यः प्रकृतयः सर्वनामशब्देषु दृश्यन्ते । Pronominal धातुभ्यः सर्वनामशब्दा निष्पन्नाः । लिङ्गत्रयेऽपि केचन सर्वनामशब्दाः समानाकारा लक्ष्यन्ते, निर्विभक्तिकाश्च केचन । सर्वनामशब्दानां Particle शब्दवाच्याः बहुत्रावयवा भवन्ति । विभक्तेः पूर्वं केषांचन प्रत्ययविशेषाणां संयोजनमपि लक्ष्यते । यथा—स्म ॥

कचिन्नामशब्दीयविभक्तयः सर्वनामसु संक्रान्ताः, कचिच्च सर्वनामशब्दीया नामशब्देषु । यथा—

| Nominal declensions | | | | Pronominal declensions | | | |
|---|---|---|---|---|---|---|---|
| | | | | द्विवचनसामान्यम् | | | |
| द्वि. | एक. | *m.* | तम् | द्वि. | बहु. | *ān* | रामान् |
| तृ. | ” | *ena* | तेन | तृ. | एक. | *ā* | हरिणा |
| | | *ayā* | तया | स. | ” | *ām* | बृहत्यां |
| प. | ” | *āt* | सर्वस्मात् | तृ. | बहु. | *ābhis* | रमाभिः |
| ष. | ” | *sya* | तस्य | स. | ” | *āsu* | रमासु |
| स. | ” | *i* | त्वयि | नपुं. प्र | ” | *āni* | वनानि |

५. पञ्च. * *penqe* प्रकृतिकः. Eng. *five.* अस्मादारभ्य लिङ्गरहिताः प्रथमाद्वितीयाबहुवचनयोर्विभक्तिरहिताश्च लक्ष्यन्ते । पूरणार्थे पञ्चमः *fifth.* सप्तमसादृश्येन *ma* कारः ॥

६. षट्. Eng. *six.* पूरणार्थे षष्ठः Eng. *sixth.* षष्+दश इति स्थिते षकारस्योत्वे गुणे दस्य डत्वे षोडशेति भवति ॥

७. सप्त * *septeṇ* प्रकृतिकः. Eng. *seven.* असावपि विभक्तिरहित एव । सप्त सिन्धुषु इति वेदे दर्शनात् । पूरणार्थे सप्तमः *seventh.*

८. अष्टौ * *oktōu* प्रकृतिकः. Eng. *eight.* अत्र *t* प्रत्यय इति ज्ञायते । अत्रत्य औकारः द्वित्वार्थबोधक इति केचित् । अष्ट शतैरिति वेदे दर्शनात् विभक्तिरहित इति ज्ञायते । आदन्तत्वेन दृश्यमानस्याष्टा इत्यस्य ह्रस्वः अष्ट इति । अत्र सप्तमसादृश्यं मूलम् । पूरणार्थे अष्टमः *eighth.*

९. नव * *neuṇ* प्रकृतिकः. Eng. *nine.* पाश्चात्यभाषानुरोधेन *n* अन्तप्रकृतिकत्वमेवास्य कल्पनीयम् । नव शतैरिति वेदे दर्शनाद्विभक्तिरहित इति ज्ञायते । पूरणार्थे नवमः Eng. *ninth.* दशमसादृश्येन नवम इति ॥

१०. दश * *dekṃ* प्रकृतिकः. Eng. *ten.* दश कक्ष्याभिरिति वेदे दर्शनादसावपि विभक्तिरहित इति प्रतीयते । *taihun* इति Gothic भाषास्थपदानुसारेण *ten* इत्याङ्गलभाषायां नान्तत्वम् । पूरणार्थे दशमः Eng. *tenth.*

## ॥ संख्यावाचकशब्दाः ॥
Numeral Declensions.

१ (एकं) आरभ्य ९९९ पर्यन्तं संख्यावाचकाः शब्दास्त्रिधा विभज्यन्ते—एकपदत्वेन समस्तपदत्वेन वाक्यत्वेन च। एकमारभ्य दशपर्यन्तं एकपदम्। ततः परं समस्तपदम्। सहस्रशब्दः संस्कृतभाषायामेकपदत्वेन लक्ष्यते। परं तु मातृभाषायां शतपर्यन्तमेव संख्यावाचकशब्दप्रयोगस्य लक्ष्यमाणत्वेन सहस्रशब्दप्रयोगो नास्तीति विज्ञायते। द्रविडभाषायां दृश्यमानः ஆயிரம் शब्दोऽपि सहस्रशब्दान्निर्गत इति केषांचिदूहः। दशशब्दः शब्दतोऽर्थतश्च संख्यावाचकेषु प्रधानः॥

१. एक. < Idg. * *aiqo* Eng. * *one.* पूरणार्थे प्रथमः। इण्डोजर्मानिक्भाषास्थ * *per* इत्यस्याः *thama* प्रत्यये अज्विपरिणामे च *prathama* इति भवति। तस्या एव *st* योगे आङ्गलभाषायां *first* इति भवति। तस्याः *va* प्रत्यये Skt. *pūrva* इति॥

२. द्वौ—मातृभाषास्थ * *duōu* प्रकृतिकः. Eng. *two.* समस्तपदेषु द्विश्रवणं त्रिशब्दसादृश्येन। पूरणार्थे द्वितीय इति। Eng. *second*, Latin *sicuor* शब्दान्निष्पन्न इति तर्क्यते॥

३. त्रयः. Eng. *three.* * *tr̥* प्रकृतिः *i* प्रत्ययः, पूरणार्थकतृतीयशब्दादिषु तथा दर्शनात्। पूरणार्थे तृतीयः *third.*

४. चत्वारः * *qetuōres* प्रकृतिकः. Eng. *four.* तुर्यतुरीयादिषु चकारस्य लोपो भवति। पूरणार्थे चतुर्थः *fourth.*

१०००. सहस्रम् । अस्य * *gheslo* प्रकृतिः स्यादित्यूहः । ईं च संस्कृतभाषामवलम्ब्यैव । भाषान्तरपर्यालोचनया किमि- । न ज्ञायते. * *gheslo* इत्यस्य हस्र इत्येव संस्कृते विकृतिः ग्रात् । सहस्रमित्यत्र तु सकारः Prefix त्वेन पश्चाद्योजितः । तस्य च Strong hundred इत्यर्थः । संख्याभ्यावृत्तिगणने संस्कृते द्विः त्रिः चतुः पञ्चकृत्वः इत्येवमादीनि रूपाणि लक्ष्यन्ते । एषां च Eng. *twice, thrice* इत्येवमादयः शब्दाः पर्यायत्वेन लक्ष्यन्ते । एकशः बहुशः वारं इत्यादयः शब्दाः संस्कृतभाषामात्र- साधारणाः । आदौ एकैक बहुबहु इत्येवमादिरूपेणैव एषां प्रयोग आसीत् । कालक्रमेण तु शप्रत्ययान्तत्वमागतम् ॥

## ॥ तिङन्ताः ॥
### Verbal Morphology.

इण्डोजर्मानिकभाषास्थानां धातूनां सुबन्तापेक्षया विपरि- णामोऽधिकः । संस्कृत इव मातृभाषायामपि Voice द्वयमासीत्— 1 Active voice परस्मैपदम् 2. Middle voice आत्मनेपदम् इति । आदिमः सर्वास्वपि भाषासु लक्ष्यते । द्वितीयस्तु Greek, Aryan, Latin, Gothic भाषास्वेवावतिष्ठते । आत्मगामिनि क्रियाफले आत्मनेपदम्, परगामिनि क्रियाफले परस्मैपदमिति नियमो मातृभाषायामप्यासीत् । अद्य तु संस्कृतेऽयं नियमः कुत्रचिद्व्यभिचरितः ॥

धातुभ्यस्तत्तदर्थविशेषेषु लडादयो लकारा विधीयन्ते । तेषां च तिङ आदेशा भवन्ति । तत्र कालप्रतिपादकतिङां Tenses

११—१९. एकादशप्रभृति एकोनविंशतिपर्यन्तम् । एकश्च विंशतिश्च, त्रयः दश इत्येवं वेदे दर्शनात् पूर्वं व्यस्ततयाऽऽसन् ततः समास इति प्रतीयते । एकादशारभ्य त्रयोदशपर्यन्तं पूर्वपदे विभक्तिः श्रूयते । इतरत्र तु न । एकादशेत्यत्र द्वादश-सादृश्येन दीर्घः । द्वादशेत्यत्र तु द्विवचनान्तत्वात्साधुरेव दीर्घः ॥

२०. विंशतिः. एतदधिकृत्य पूर्वमेवाभिहितम् ॥

३०. त्रिंशत्. Eng. *thirty.* त्रिशत् इत्येव भवितव्ये विंशतिसादृश्येन त्रिंशदिति । त्रि इत्यत्र विद्यमान इकारो नपुंसकबहुवचनप्रत्यय इत्यूहः ॥

४०. चत्वारिंशत् ५०. पञ्चाशत् ६०. षष्टिः ७०. सप्ततिः । एषु कालक्रमेण दशसमूहवाचकत्वमागतम् । आर्यन्-भाषाणां विभागकाले षड्भिर्गुणनं (multiply by six) (ஆறால் பெருக்குகிறது) संप्रदाय आसीत् । द्राविड्यामपि तथा प्रभवे-त्यादिवर्षगणना । अत एव आर्यन्भाषायां षष्टिः इत्यस्य प्राधा-न्यमित्येके ॥

८०. अशीतिः । अस्यापि दशसमूहवाचकत्वं पश्चादागतम् ॥

९०. नवतिरप्येवमेव ॥

१००. शतम् । एतदधिकृत्य पूर्वमेव प्रपञ्चितम् । पूरणार्थे शतः शततमः इति द्वेधा भवति ॥

२००—९००. द्विशतं द्विशते, त्रीणि शतानि त्रिशतम् इत्यादि-प्रयोगः Indo-germanic कालेऽप्यासीदिति ज्ञायते ॥

पूर्वं तावत् इण्डोजर्मानिक्भाषायां त्रयः क्रियाप्रकाराः (Mood or manner of actions) आसन् । यथा—

1. Momentary or Perfective or Aoristic
2. Durative or Cursive or Imperfective
3. Iterative.

१. एककालावच्छेदेन समाप्तिमुपगच्छन्त्यः क्रियाः—[Point (.) action]

२. बहुकालानुवर्तिन्यः क्रियाः—[Line (—) action]

३. पुनः पुनरुद्भवन्त्यः क्रियाः—[Line (— — —) action]

एष्वेव सर्वेऽपि धात्वर्था अन्तर्भूताः । प्रत्येकमेषां पृथक्पृथक् प्रत्ययाः । आद्यस्य *find* उदाहरणम् । द्वितीयस्य *seek* (अन्वेपणं), तृतीयस्य यङ्लुगन्ताः ॥

प्राथमिकानां द्वितीयभेदान्तर्भावश्च उपसर्गादिसंयोजनेन कर्तुं शक्यते । अन्येषामप्येवमेव । ब्रूञ् द्वितीयान्तर्गतः । अस्य Perfect नास्ति । अस्मिन् Perfect प्रत्यययोजनस्याशक्यत्वात् वच् इति पाणिनिना तत्र कल्पितः । यथा—उवाच । आह इति तु वस्तुतो लिड्रूपम् । प्रथमभेदान्तर्गतश्च । ब्रूञ् धातोः Durative Type प्रत्ययं ग्रहीतुमसामर्थ्यात्तदेव लिड्रूपमत्रापि भवतु इत्युक्तम् ॥

Morphological classification रीत्या धातूनां रूपत्रितयं भवति– 1. Present stem. 2. Perfect stem (अत्राभ्यासः) 3. Aorist stem इति । ख्यातीनां रूपत्रितयमपि भवति ।

इति नाम । तदितरप्रतिपादकानां तु Moods इति नाम, ते च लोडाशीर्लिङादयः । व्यवहारोऽयमादौ मातृभाषायां नासीत् ॥

अत्रेदं बोध्यम्—तिङ्ङ् *ti, si, mi* इत्येवमेव पूर्वमासन्, त एव पश्चात्तु *i* लोपे *t, s, m* इत्येवं निष्पन्नाः, यथा—अगादित्यादौ स्वरस्याङ्गत्वेन *i* लोपः इति केचिदभिप्रयन्ति । केचित्तु *t, s, m* इत्येवमेव पूर्वमासन्, ते च परोक्षद्योतकाः, पश्चात्तु वर्तमानद्योतनाय तेषु *i* कारः संयोजितः, ततश्च *ti, si, mi* इत्येवं निष्पन्नाः, *i* वर्णस्य वर्तमानद्योतकत्वं च इदमित्यादौ लक्ष्यते—इति ॥

Bopp विमर्शकस्तु एवं व्याचष्टे । अस्मच्छब्दस्य तिङुत्तमपुरुषैकवचनबहुवचनयोः तथा युष्मत्तच्छब्दयोस्तिङ्प्रथमपुरुषस्य च अतिशयितोऽस्ति संबन्धः । यथाक्रममुभयत्र म-त-वर्गयोराधिक्येन श्रूयमाणत्वात् । आङ्गलभाषायामपि उत्तमपुरुषवाचकेषु मवर्णोऽधिकतया श्रूयते । यथा *me, my, mine.* तथा प्रथमपुरुषवाचके तवर्गोऽपि । यथा *they, them, their.* केचित्तु मध्यमपुरुषेऽपि युष्मत्तच्छब्दयोः संबन्धोऽस्तीति वक्तुं शक्यते, *you, your, thou, thine* इत्यादिदर्शनादित्यभिप्रयन्ति । एतेन सर्वनामशब्दानां तिङां च महदस्ति साम्यमिति सिद्धम् । एवमेतेषां परस्परसाम्यं तत्प्रयुक्तं संबन्धाधिक्यं च पर्यालोच्य मातृभाषायां *ma* कारोपलक्षितः कश्चनानिर्वचनीयः शब्द एव उत्तमपुरुषवाचकः, तथा तवर्गोपलक्षितः कश्चन प्रथमपुरुषवाचक इत्यनुमातुं शक्यते इत्येवं प्रतिपादयामास ॥

यत्र प्रकृतितः प्रत्यये स्वरोऽपगच्छति तत्रादिमो विभागः । यत्र प्रकृतिस्थस्य स्वरस्य विपरिणामो नास्ति स द्वितीयः । भ्वादि-तुदादि-दिवादयो द्वितीयस्योदाहरणम्, शिष्टा आद्यस्य ॥

Derivative conjugations इति केचन वर्तन्ते । णिजन्तसदृशानां धातूनामिदं नाम । दिवादावात्मनेपदिनो ये धातवस्तेऽत्रान्तर्भूताः । यथा जायते म्रियते । परस्मैपदिनस्तु न तथा । ते च पश्चात्तत्र योजिता इति प्रतीमः । तनादौ कृञ्वर्जं सर्वे नान्ता दृश्यन्ते । ते च नकारवर्जं स्वादौ पठितुं युक्ताः । अथापि शिदशित्कार्यं निमित्तीकृत्य पाणिनिना द्विधा विभागः कृतः ॥

धातुषु केचन पूर्वं Athematic रूपेण स्थित्वा पश्चात् Thematic संजाताः । तथाहि—पाधातुर्वस्तुतः Athematic, तेन साकं विकरणव्यवधानेन तिङं योक्तुमुद्यतः पाणिनिः तत्स्वरूपेण तथा योक्तुमशक्नुवन् पा इत्यस्य पिब् इत्यादेशं विदधौ । पिब इति तु अभ्यस्तरूपम् । कालक्रमेण तस्य तथा निष्पत्तिः । घ्राध्मादयोऽपि तथैव । प्राकृतेषु एतादृशविपरिणामा भूयांसो विद्यन्ते । यथा—दोग्धि दोहति । लेढि लेहति । एवं धात्वन्तरेष्वपि विकरणान्तरप्रवेशो लक्ष्यते । यथा—रिणक्ति रेचति । जागृ पूर्वं जुहोत्यादिः, पश्चाददादिः । अन्ये च स्वयमूह्याः ॥

पाणिनिप्रोक्तेषु धातुषु कांश्चन विचार्य केचन स्वस्वरूपादधिकविभागयुक्ता इति Brugmann निरूपयति । यथा—

* *gm̥skh.* अत्र *gm̥* एव धातुः । तस्माद्विकरणस्य योक्तुमशक्यत्वेन सौकर्याय *skh* पश्चाद्योजितः । एवमादीनां Root

यथा—भवति बभूव भविता भविष्यति भवतु अभवत् भवेत् भूयात् अभूत् अभविष्यत् भवात् (लेट्)। केषांचित्तु धातूनां रूपद्वितयमेव—यथा जुहोत्यादीनाम्। तत्र Present stem नास्ति। केषांचिद्धातूनां Present stem, Aorist stem च तुल्यम्। यथा— भाति अभात्॥

Fiske नामकः पाश्चात्यविद्वानित्थमुपवर्णयति—मातृभाषायां ये तावद्धातव एकाच्काः त एव क्वचिदनेकाच्का बभूवुः। यथा दरिद्राप्रभृतयः। अनेकाच्केषु चोदात्तस्वरस्य पूर्वस्मिन्नचि विद्यमानत्वे द्वितीयोऽच् weak भवति। यथा—

$* \sqrt{bhér\partial}^2 + ti > * \sqrt{bher}^2 + ti >$ Skt. *bibharti* (Athematic).

द्वितीयस्मिन्नचि स्वरसत्त्वे पूर्वः weak भवति। यथा—

$* \sqrt{bh\partial ré}^2 + ti > * \sqrt{bhre}^2\ ti >$ Skt. *bibhrati* (Thematic).

उभयत्र Neutral vowel लुप्तः, अजन्तरे स्वरसत्त्वेनास्यापचयावस्थापन्नत्वात्. *bibhrati* इत्यत्र $* e >$ Skt. *a* एव पश्चात् धातोर्विभज्य विकरणत्वेन कल्पितः॥

यथा वा— $* \sqrt{bhév\partial} >$ Skt. *bháv* + *a* + *ti* > *bhavati*. अत्रादावुदात्तस्वरः शबनुदात्तः। 'अनुदात्तौ सुप्पितौ' इति वदतः पाणिनेरपि संमतमिदम्॥

पुनश्चैते Vowel-gradation रीत्या द्विधा भवन्ति—

1. Graded conjugation
2. Non-graded conjugation.

इति । उत्तमपुरुषस्यात्र प्रयोगो नास्ति । स्वस्य स्वविषये पारोक्ष्याभावात् । अत एव बभूव-इयाय-उवाच-प्रभृतीनि प्रथमपुरुषरूपाण्येवात्रापि ॥

संस्कृते Periphrastic Perfect इति कश्चन लिटो भेदो लक्ष्यते । स च इण्डोजर्मानिक्भाषायामासीन्न वेति न शक्यते निर्धारयितुम् । नायमस्ति ऋग्वेदे । 'इजादेश्च गुरुमतोऽनृच्छः' 'कास्प्रत्ययादाममन्त्रे लिटि' 'दयायासश्च' इत्यादिसूत्रविहित-आम् प्रत्ययान्ताः कृत्राद्यनुप्रयोगसहिताश्च धातवः Periphrastic Perfect इत्युच्यन्ते । यथा एधांचक्रे-एधांबभूव-एधामास-प्रभृतयः । भूधातोः स्वतः परस्मैपदित्वेऽपि 'तस्यातपत्रं बिभरां बभूविरे' इत्यादयः प्रयोगा एधांचक्रेसादृश्येन. Classical समय एव एषामाधिक्यम् । अत्रापि क्वचन स्थलेषु विशेषो लक्ष्यते । प्रकृतिभूतानामामन्तानां अनुप्रयुज्यमानानां धातूनां च मध्ये पदान्तराणि (Tmesis) व्यवधायकानि क्वचन लक्ष्यन्ते । यथा 'प्रभ्रंशयां यो नहुषं चकार' इत्यादयः ॥

एवं Contracted Perfect एत्वाभ्यासलोपवन्तो लिटोऽपि संस्कृतभाषायामेव लक्ष्यन्ते । एत्वाभ्यासलोपश्च वेदे द्वादशानामेव धातूनामिति केचनाभिप्रयन्ति । ते च इत्थम्— तप् दभ् नम् पच् पत् यत् यम् रभ् लभ् शक् शप् सप् । अथर्ववेदे तन् सच् धात्वोरपि भवतीति Macdonell.

एवं Pluperfect इति कश्चन भेदोऽस्ति । स च वेदे षट्कृत्वः प्रयुक्तः । द्वित्वेनाडागमेन च सहिता ये धातवः त

determinatives इति नामेति Brugmann. तनादौ विद्यमानो नकारोऽपि Root determinative एव । यथा *ta* + *nu* + *te* =*tanute*. इमे च Root determinatives पूर्वं स्वातन्त्र्येणार्थबोधकपदत्वेनास्थाय पश्चादेवमभूवन् ॥

पुनः Morphological classification रीत्या, Conjugations दशधा भवन्ति । विकरणभेदस्तत्र मूलम् ॥

Semantic classification रीत्यापि ते दशधा भवन्ति । यथा—1. Present tense 2. Perfect tense 3. First future 4. Second future 5. Imperative mood 6. Imperfect tense 7. Potential mood (Injunctive) 8. Benedictory mood 9. Aorist tense 10. Conditional mood (or tense) 11. Vedic mood. सर्वेऽप्येते न मातृभाषायामवस्थिताः ॥

Present tense मातृभाषायामासीत् । भवति-एधते-प्रभृतीनि लड्रूपाण्यस्योदाहरणानि ।

एषु भूतार्थबोधकास्त्रयो विद्यन्ते—

1. Perfect or Remote Past
2. Aorist or Immediate Past
3. Imperfect or Past of Narration इति ॥

## Perfect or Remote Past.

पूर्वमेव मातृभाषायामयमासीत् । तत्र च त्रयः सन्ति असाधारणा धर्माः. 1. Reduplication द्वित्वं 2. Vowel-gradation (अज्विपरिणामः) 3. Special endings (पृथक् प्रत्ययाः)

## Imperfect or Past of Narration.

Old relic रूपेणायमासीत् । आदौ किंचिद्रूपेणास्थाय क्रमशः अद्य यादृग्रूपेण लक्ष्यते तादृग्रूपमलभत । अयं लट्-प्रकृतेरेव निष्पन्नः । अत्राडागमो विशेषः । अयं चाडागमः पूर्वं Adverb of time आसीत् । ततः क्रमशः प्रत्ययः संजातः । तदायं सस्वरः । अत एव इत उत्तरत्र विद्यमानानां तिङां इकारस्य लोपो भवति । पाणिनिरपि 'इतश्च' इति सूत्रेण आशय-मिममाविष्करोति । यथा—*a+bhav+a+ti > a bhavat.* अडागमस्यास्य Augment इति नाम । अत एव चैतेनोपलक्षि-तयोर्लुङ्लङोः Augmented Tenses इति नाम । लृङ्स्तु Augmented Mood इति ॥

## MOODS.

इण्डोजर्मानिक्भाषायां चत्वारो Moods आसन् ॥

1. Subjunctive mood e.g. *bhavāti bhavāt* लेट्
2. Optative mood e.g. *bhavet bhūyāt* लिङ्
3. Injunctive mood e.g. *bhūt ciketat* अड्रहितो लुङ्
4. Imperative mood e.g. *bhavatu viddhi* लोट्

१. एष्वाद्यः लेट् संस्कृते नास्ति । अस्योत्तमपुरुष-रूपाण्येव तत्र लोडुत्तमपुरुषे व्यवतिष्ठन्ते । मातृभाषायां लोडुत्तमपुरुषरूपाणि नासन् । एतानि Historical survival. प्राथमिकश्चायं Mood वेदे मातृभाषायां च प्रायशो भविष्यदर्थे प्रयुक्तः । भूधातोर्लेटि यथा—

एवोच्यन्ते Pluperfects इति । प्रायेणायं लुङ्येव भवति । यथा—अचीकमत अशिश्रियत् अचूचुरत् अमुमुक्तम् अचिकेतत् । अडूहिता अपि कचन । यथा चकारं चिकीतं मुमुक्तं ॥

Aorist or Immediate Past.

अयं मातृभाषायां पूर्वमासीत् । वेदे त्रिधा प्रयुज्यते—

१. स्वानुभवकथनेऽस्य प्रयोगः । आङ्गलभाषायां Present perfect यत्रोपयुज्यते तत्र । यथा—'इयमूर्वशी मनुष्येष्ववात्सीत् गन्धर्वा एवमवादिषुः' इति कश्चिद्ब्रूते । गन्धर्वाः स्वयमेवोर्वशीवासं मनुष्येष्वपश्यन्निति स्वानुभवः ॥

२. भूतानद्यतनेऽर्थे प्रयोगः । यथा—स बन्धुः शुनासीर्यस्य यं पूर्वमवोचयाम । शुनासीर्यहविषो यं पूर्वमवोचाम इत्यर्थः ॥

३. परोक्षभूते प्रयोगः । यथा—कस्माच्चित्कर्मणस्त्यागादेर्जायमानफलबोधने प्रयोगः । यथा पुत्रस्य नाम गृह्णाति प्रजामेवानुसमतनीत् । स्वपुत्रस्य नामकरणेन स्वीयं वंशं वर्धयामासेत्यर्थः ॥

*s* Aorist. अयं वेदे ब्राह्मणे च १३५ धातूनां भवति ।

*sa* Aorist संहितायां मृज्-यज्-प्रभृतीनां दशधातूनां भवति । ब्राह्मणे नवानाम् ।

*iṣ* Aorist मन्त्रब्राह्मणयोर्मिलित्वा १४५ धातूनाम् ।

*siṣ* Aorist वेदे सप्तानाम् । यथा—१. गा अगासिषुः २. ज्ञा ३. प्या प्यासिषीमहि ४. या ५. हा हासिष्ट ६. वन् वंसिषीय ७. रम् रंसिषम् । ब्राह्मणे ध्या-द्रा-वा-ह्वा-प्रभृतीनामपि लक्ष्यते । विस्तरस्तु उपोद्धाते Analogy प्रकरणे द्रष्टव्यः ॥

Future arose upon the ruins of the Subjuncti ve. तथा च लेटिन्भाषायां *erit* (असत्) इत्ययं शब्दः Subjunctive अर्थे Future अर्थे च प्रयुक्तः। अयं त्रिधा भवति । यथा—

1. Periphrastic Future (लुट्) भवितेत्यादयः ।
2. Normal Future (लृट्) भविष्यतीत्यादयः ।
3. Conditional Future (लृङ्) अभविष्यदित्यादयः ॥

१. आद्ये प्रथमपुरुषे कर्तृवाचकतृजन्तशब्दस्वरूपं श्रूयते । मध्यमोत्तमयोस्तेन असधातोर्लण्मध्यमोत्तमपुरुषप्रत्ययाः संयुज्यन्ते । मध्यमोत्तमद्विवहुवचनयोरेकवचनसादृश्येन रौ-रस्-लोपः ॥

२. द्वितीयस्तु धातूनां तिङां च मध्ये स्य इति योजनेन निष्पद्यते । यथा धास्यति । क्वचनायं स्य इष्य इति भवति । यथा भविष्यति । स्य इत्यत्र स् य इत्यंशद्वयमस्ति । तत्र स्—अस् धातोरेकदेशः । य इति तु याधातोः । आङ्गलभाषायामपि भविष्यदर्थबोधने एवं लक्ष्यते । यथा *I am going to see.*

३. तृतीयस्तु लङन्ततुल्यः, परं तु अडागमपूर्वः अन्त्ये-कारलोपवांश्च । यथा—अभविष्यत्प्रभृतयः ॥

एष्वाद्यस्तैत्तिरीयसंहितायामस्ति न वेति न शक्यते निर्धारयितुम्। तथाहि–'अन्वागन्ता यज्ञपतिर्वो अत्र' इत्येवमादयः प्रयोगा वेदे लक्ष्यन्ते । तत्र अन्वागन्ता इति रूपं तु भविष्यदर्थ-कमिवास्ते । अर्थस्तु अन्वागच्छति इति वर्तमान एव । अतो न निश्चयः । ब्राह्मणे त्रिंशतो धातूनामयमस्ति । बहुशोऽयं कर्तर्येव प्रयुक्तो न कर्मणि ॥

| | | |
|---|---|---|
| भवाति-भवात् | भवातः | भवान् |
| भवासि-भवाः | भवाथः | भवाथ |
| भवानि-भवा | भवाव | भवाम |

२. द्वितीये (लिङि) विशेषो नास्ति ॥

३. अडूहितो लुङ् संस्कृते माङ्योगेनास्ति । मा भवान्भूदित्यादय उदाहरणानि । तत्रत्य भूत् प्रभृतयः Historical survival.

४. लोटि भवतादित्यादिः सर्वत्र भविष्यदर्थकः । तत्र च वेदे सुस्पष्टमेतत् । यथा—वनस्पतिरधि त्वा स्थास्यति तस्य वित्तात् इति । वृक्षस्तवोपरि पतिष्यति, जागरूको भूयाः इति वाक्यार्थः । तादिति तच्छब्दादागतमिति Brugmann अभिप्रैति ।

इमे च Moods प्रत्येकं तिस्रः प्रकृतीः स्वीकुर्वन्ति । यथा—

1. Present stem 2. Perfect stem 3. Aorist stem.

यथा—Subj. *bhavāti bubodhati stoṣāṇi*

Opt. *bhavet jagamyāt bhūyāt*

Inj. *bhavat susrot stoṣam*

Imp. *bhavatu mumoktu śrudhi.*

पूर्वोक्तेषु Subjunctive mood केवलं Future stem अपि गृह्णाति । यथा *kariṣyāḥ*.

## Future tense.

इण्डोजर्मानिकभाषायामयं नासीत् । तत्र भविष्यदर्थेऽपि Subjunctive mood एव प्रयुक्तः । कालक्रमेण तस्य विनाशात्तदर्थबोधकत्वेनायं Future tense पश्चात्कल्पितः. Future tense तावत् Subjunctive mood ध्वंसजन्य इत्याङ्गलप्रवादः ।

4. Intensives or Frequentatives पौनःपुन्यार्थका यङन्ता यङ्लुगन्ताश्च । आद्यस्यायं निष्पत्तिप्रकारः—Redup. Root + *ya* + *ta*. यथा *bobhūyate*. द्वितीयस्य यथा—Redup. Root + ... + *ta*. यथा *bobhavīti*.

## ॥ अव्ययानि ॥

### Adverbs.

ये तावच्छब्दाः सर्वेषु लिङ्गेषु सर्वासु विभक्तिषु सर्वेषु च वचनेषु तुल्यरूपा वर्तन्ते त एवोच्यन्तेऽव्ययानीति । तदुक्तं वैयाकरणैः—'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥' इति । तानि च विभक्तिप्रतिरूपकाणि केवलानि चेति द्विधा भवन्ति । तत्राद्यस्य यथा—प्रातः सायं अन्तरेण सनेमि उच्चैः नीचैः शनैः आरात् चिरात् सयात् ऋते हेतौ रात्रौ । द्वितीयस्य यथा—ततः कुतः तत्र कुत्र यत्र अत्र । एषु विभक्त्यभावेऽपि पञ्चम्यादयोऽर्थास्तथैव लक्ष्यन्ते । वेदे तु तृतीयैकवचने पश्चा इत्युक्तम् ॥

अत्रेदमवधेयम्—पूर्वोक्तानामुच्चैसित्यादीनां रूपाणां भाषान्तरावस्थितपदानां च पर्यालोचनेनाव्ययेभ्योऽपि मातृभाषात आरभ्य सर्वा अपि विभक्तय आसन् । पश्चात्तु कालस्य व्यवहारस्य च वशात्ताः क्रमेण परिक्षीणा इति । 'अव्ययादाप्सुपः' इति पाणिनिसूत्रमप्यस्यानुग्राहकं भवति । आङ्गलभाषायां नामशब्देभ्यो विभक्तीनामभावेऽपि अव्ययेषु ता दृश्यन्ते । वेदे प्राप्य प्राप्या

द्वितीयः ऋग्वेदे षोडशधातूनामेव, अथर्वणि द्वात्रिंशद्धातूनां, तैत्तिरीये षष्ट्यधिकानाम् । वेदे ब्राह्मणे च मिलित्वा स्ययुक्तः शताधिका धातवः । इष्ययुक्तास्तु अशीतिरिति तर्क्यते । ऋदन्तानां सर्वेषां इष्य भवति । 'ऋद्धनोः स्ये' ॥

तृतीयः संहितायां एकस्यैव धातोः । यथा अभरिष्यत् । ब्राह्मणेऽप्यल्पानामेव । तत्र शतपथब्राह्मणे पञ्चाशद्वारं प्रयुक्तः ॥

Derivative Verbs.

1. Causatives हेतुमण्णिजन्ताः । धातोरुपरि * eịo > Skt. *aya* योजनेन निष्पन्नाः । यथा—वेदयति । अयमृग्वेदे १५० धातूनामस्ति । तत्र प्रञ्चाशदन्यूनेषु Causative अर्थं विना पौनःपुन्यमेवार्थः । कुत्रचित्तु उभयस्मिन्नप्यर्थे समानाकारमेव रूपम् । यथा—पतयति, वलयाकारेण पौनःपुन्येन डयते । पातयति डयमानं प्रेरयति । आदावयं पौनःपुन्यार्थेऽप्यासीत् । यथा—*ajijapata ajījipata.* पौनःपुन्येन जायेय । एवमादीनां Causative aorist इति नाम ।

2. Denominatives तत्करोति तदाचष्ट इति विहिताः । stem + * ịó > Skt. *ya + ti.* यथा—*devayati.*

अत्र प्रथमद्वितीययोः संकरोऽपि क्वचन लक्ष्यते । यथा—

*mantṛ + áya + ti = mantrayati.*

*mantra + yá + ti = mantrayáti.*

3. Desideratives इच्छार्थकसन्नन्ताः । अयमेषां ...त्तिप्रकारः. Reduplicated Root + *sa* + *ti.* यथा—...तिपति दित्सति ॥

एव पूर्वमासन् । ते चैकाचः (monosyllables). अनन्तरं परस्परं संश्लिष्टाः तिलतण्डुलन्यायेन, विभक्ताः प्रकृतिप्रत्ययत्वेन । संसृज्य च नीरक्षीरन्यायेन ऐकात्म्यमापुरन्ततः । तादृशसांकर्यमेव Composition व्यपदेशभाक् । यथा—* √*ed-ta* > * *etti* > Skt. *atti*. * √*deik-sie-ti* > Skt. *deksyati*. Show he be go= He is going to show. * *bhero-to* > Skt. *bhara-ta* > *bharati*. उक्तविधया भिन्नभिन्नास्तत्तदर्थबोधका इतरानपेक्षाः श्लिष्टाः शब्दा व्यवहर्तृभिः समभिव्याहृततया संसृज्य तादात्म्यरूपं साङ्कर्यमवापुः । इति Bopp मतम् । Brugmann शाब्दिकोऽपि मतमेतदुपोद्बलयति । अस्य Composition मतस्यैव Agglutinating theory, Coalescence theory इति च व्यपदेशः ॥

Bopp विमर्शकात्प्राचीनः Von Schlegel अत्रान्यथाभिप्रेयाय । तन्मतस्य Evolution theory इति व्यपदेशः । मतेऽस्मिन् पदान्यविकलान्येवासन्. Evolution इति पदस्य परिणाम इत्यर्थः । अतश्चाविकलेभ्यः पदेभ्यः अङ्कुरविधया निर्गलिताः प्रत्ययाः । सर्वनामांशाश्च प्रातिपदिकेभ्यः अन्तान्विच्छिद्य प्रत्ययानुरूपमाविर्बभूवुः । क्रमेण तिङन्ताः सर्वनामांशाश्च परस्परानपेक्षा भूत्वा युगपद्व्यवहारे प्रतिष्ठामलभन्तेति ॥

*bharati* > *bhara—ti*

*ti* (inflexional ending) *ta* (pronominal stem)

Bopp विमर्शकस्तु Schlegel मतमेव कंचित्कालमाश्रित्यानन्तरं

इत्युभयथा रूपं लक्ष्यते । तत्र प्राथमिकमेवादित आरभ्य व्यवतिष्ठते । पश्चात्तु त्वासादृश्येन तत्र प्राप्या इति दीर्घः संजातः । संस्कृतेऽपि ह्रस्वरूपाण्येव लक्ष्यन्ते । किंच प्र ते ब्रवीमि (भिनद्मि) इत्येवमादिरूपेण वैदिकप्रयोगाणां लक्ष्यमाणत्वेन उपसर्गा अपि पूर्वं व्यस्ता एवासन्निति प्रतीयते । 'ते प्राग्धातोः' इति सूत्रस्य तदतिरिक्ता एव विषयाः ॥

## ॥ शब्दपरिनिष्ठितिप्रकारे मतभेदः ॥

### Theories regarding Word-formation and Inflexion.

इण्डोजर्मानिकभाषायां अन्तानिष्पत्तिः (Stem-formation) विभक्तिपरिणामश्च (Inflexion) अनुगते एकस्मिन्नये प्रतिष्ठिताविति Brugmann प्रभृतिशाब्दिकवर्या आशेरते । तादृशानुगतनयान्वेषणे बद्धकङ्कणा आधुनिकाः शाब्दिका नैकविधमुल्लिखन्ति । अतीव प्राचीनाः व्यवहारार्थं प्रातिपदिकं कृत्वा स्वाशयाविष्करणार्थं तत्तदर्थावबोधकप्रत्ययैः कथं वा परिणतीः संपादयामासुः, कथं वानुगताननुगतशब्दनिष्पत्तिप्रकारस्तेषामित्यत्र इयत्तापरिच्छेदो यद्यपि दुष्करः तथापि शाब्दिकोल्लिखितेषु नैकविधेषु कतिचिदेव मतान्युदाहरिष्यामः ॥

तत्रादौ गणनामर्हति Bopp विमर्शकोपज्ञः Composition theory नाम्ना संकेतितः कल्पः । व्याकरणसंप्रदायप्रवर्तकोऽयं Bopp शाब्दिकोऽपि—सर्वेऽपि शब्दाः स्वतन्त्रा धातव

## ॥ भाषोत्पत्तिः ॥

### The Origin of Speech.

अत्रास्ति मतचतुष्टयम् ।

1. Bow-vow theory or Onomatopoeic theory. ये ये प्राणिनो यथा यथा शब्दायन्ते तथा तथा तादृशशब्दानुसारेण तेषां नामकल्पनस्येदं नाम । यथा—का इति कौतीति काकः । भे इति कौतीति भेकः । अन्यत्र *cuckoo* कोकिलप्रभृतयः स्वयमूहनीयाः. Max Muller पण्डितस्तु भेदमिमं Bow-vow इत्येवमुपहसति स्म ॥

2. Interjection theory or Pooh-pooh theory. अयं च द्वेधा भवति— i. Primary Interjection theory ii. Secondary Interjection theory इति । हर्षशोककोपमोहादिभिरकस्मादेव स्वात्मानमपि विस्मृत्य ये शब्दा उद्भवन्ति तेऽत्राद्यस्य विषयाः । यथा *pooh* (ऊ इति द्राविडभाषायां), हाहा, हह, अहो, हन्त, बत, *Alas! Oh.* शिष्टा ऊहनीयाः । द्वितीयस्य तादृशा धातुजाः शब्दाः Derivative declensions विषयाः । यथा—अपेहिप्रभृतयः । हन्तादिकशब्दौ तु उभयसाधारणौ ॥

3. Muscular theory. रज्ज्वादीनामाकर्षणकाले अकस्मात्ते शब्दा जायन्ते स्पष्टास्पष्टतया तेऽस्य विषयाः । यथा—* *tyn or ten* > Skt. *tan.* तन्तुमाकर्षणकाले निष्पन्नोऽयम । एवं लिख्, लेखनकाले दन्तजिह्वोष्ठादिना निष्पन्नः . एवमन्येऽपि॥

तत्रास्वारस्यं पश्यन् स्वीयं Composition मतं रचयामास ।

Bopp विमर्शकादर्वाचीनः Alfred Ludwig न Adaptation मतमवतारयामास । एतन्मते पदान्यविकल सर्वनामांशैः साकं पार्थक्येनासन् । गलति काले अन्ताः सर्व श्रामानुरूप्यं लम्भिताः यथा—

* *bherote* (Full word) ; *ta* (pronominal elemen
—*ti* = *ta.*

*ta* इति सर्वनामांशः यदनुरोधं ति इत्यस्यापि प्रथम पुरुषद्योतकत्वं तिङ्त्वं च व्यवस्थापितम् ॥

आधुनिकः शाब्दिकतज्ञः Otto Jespersen नाम Secretion मतस्य रचयिता । वस्तुतः मतमेतत् Adaptation मतमेव किञ्चिदिव परिष्कृतम्. Secretion मतेन एतदवगम्यते यत् पदस्य कश्चिदंशः प्रधानव्यवहारायालंभूष्णुरभूतपूर्वां व्याकरण-शक्तिमुपलभ्यानन्तरं व्यवहर्तृभिः प्रकृतिभूतात्पदाद्भिन्न इव च व्यवहारार्थं प्रकृत्या साकं संयुक्त इव च गृह्यते ॥

By secretion, we have to understand the phenomenon that one integral portion of a word comes to acquire a grammatical signification which it did not originally possess and is afterwards felt as something added to the word —Jespersen.

बहुत्र सुप्तिङादयः प्रत्यया उक्त-Secretion-विधयैव उत्पन्ना इति दर्शयितुं पार्यते । पदाद्विच्छिद्य अंशः प्रत्ययसंज्ञां लभते । तादृशविच्छेदः Metanalysis इत्युच्यते । Secretion नाम

## ॥ भाषाशास्त्रचरित्रम् ॥

History of Comparative Philology.

का नाम भाषा? तस्याश्च किमिति न सर्वत्रैकरूप्यम्? प्रथमतः पदानि कथं चोदभूवन्? नामतद्धेोध्ययोश्च को वा संबन्धः? वाच्यवाचकयोश्च कथं चेदृक्ता—इत्येवमादिविषयाः यदा मानुषमतिम्, अयस्कान्तमणिरिव लोहम्, आचकर्षुः तदैव भाषाशास्त्रमुदभूदिति वक्तुं पार्यते। एतादृशानां समालोच्य विचारस्तत्तद्देशकालावच्छेदेन तत्तन्मतिवैशद्यानुगुण्येन च प्रवृत्तः, यथा प्रपञ्चोत्पत्त्यादिविषये। ईशस्तावत्प्रातिस्विकतया भाषां ससर्जेति कश्चित्। स एवेशः पुरतः प्राथमिकस्य पुरुषस्य तिरश्चो मेलयामास तत्तन्नामकरणार्थमित्यपरः। तथा च प्राचीनेषु पाश्चात्य-प्रमाणग्रन्थेषु एवं दृश्यते यत्—भाषा नाम मानुषाहन्ताममता-फलतयाऽऽपतितमिति। तादृशविषयविचारावसरे आनुषङ्गिकतया तत्तद्भाषाघटकपदनिष्पत्तिप्रकाराश्च संपतिताः। यत्किंचिदर्थसाजा-त्येन तथा ध्वनिसाजात्येन च स्वैरं पदनिष्पत्तिप्रकारः संकलितः। पुनरत्र विशिष्य ग्रेकाः विचारयांचक्रुः, तदनुयायिनश्च रोमकाः। अत्र प्लेटोशार्मा (Plato) ग्रेकः स्वीये Kratylos ग्रन्थे बहुधा भाषातत्त्वं विचारयति॥

4. Ding-dong theory. Max Muller विदुषोऽयमभिमतः । पदार्थस्वभावानुगुण्येन ये शब्दाः सन्ति तेऽस्य विषयाः । यथा— *wind* (व् इति गच्छतीति कृत्वा) ; *blunder*—शब्दश्रवणकाल एव क्लिष्टत्वेनाबद्ध इव श्रूयत इति कृत्वा ; *whisper* (रहस्यम्) तस्मिन्काले विस् विस् इति श्रूयत इति कृत्वा ; *glow* (दीपस्यातिप्रकाशतया वर्तनम्) ओ इति प्रकाशत इति कृत्वा ; वात—व् इति वातीति कृत्वा ; दुहिता—दोग्धि इति कृत्वा । पदार्थस्वभावानुगुण्येन शब्दानां यद्वर्तनं तस्य Sound-symbolism or Sound-echoism इति नाम ॥

एतदनुसारं लेटिन्भाषायामपि । एवं क्रमशः तत्र तत्र भाषायाम् अभूत् । समयेऽस्मिन् पुस्तकमुद्रणाधिगमनं अतिवेलमुपचकार प्राचीनभाषापरिचयम् । क्रैस्तवमूलग्रन्थाश्च Hebrew भाषायामेव प्रथमतो निबद्धाः, येषां ज्ञानं सर्वेषां क्रैस्तवानां, वेदाध्ययनमिव द्विजानां, आवश्यकमभूत् । यथावत्तात्पर्यनिर्णयार्थं च हीब्रू सम्यगधीता विशिष्य क्रैस्तवमताचार्यैः । तदनु वाक्यशोधनार्थं वादग्रन्था अपि, यथा व्युत्पत्तिवादादिकं तार्किकादीनाम् ॥

किंच Bible प्रतीचीमण्डले तत्तद्भाषासु प्रतिनिबद्धः, Gothic भाषायां, Anglo-Saxon भाषायाम्, Old German, Old Icelandic भाषायामित्येवमादिषु । इमाश्च भाषाः क्रैस्तहायनीयसप्तदशाष्टादशशतकयोः Bible प्रचारकैः प्रतिनिबन्धनैकरूप्यसंपादनाय मिलित्वा परस्परं परिवर्तिता इति तदेतत् परिवर्तनं नाम भाषाणां, तत्तद्भाषाप्रवीणान् भाषान्तराण्यभिन्यवीविशत् । तैश्च भाषान्तरपर्यालोचने पदं निर्व्याजं प्रेम च न्यधायिषाताम् । Leibniz नामा तत्त्वशास्त्री भाषातत्त्वमधिजिगमिषुः Peter महाराजेन तत्तद्भाषानिघण्टुनिकुरम्बं संग्राहयामास । एतादृशः परिश्रमो भाषायां, तच्छास्त्रोत्पत्तिं संधुक्षयति स्म. Hervas नामा कश्चिच्छाब्दिको भाषाणामनुगत्यधिगमने कोशापेक्षया व्याकरणस्यैव प्राधान्यमुपन्यास्थत् । भाषाया भाषान्तरसंबन्धपर्यालोचनमेव Comparative Linguistics इति कथ्यते ॥

Middle Ages, Renaissance काले च प्राधान्येन परिगणिता भाषा Latin, संस्कृतभाषेव भारते वर्षे. Latin व्या-

सर्वथा भाषां सप्रमाणं शास्त्रत्वेन तत्पूर्वतया अनितरसाधारणविधं विचारितवन्तो भारतीयाः शाब्दिका एवेत्यविप्रतिपन्नमिदम्। येषां व्याकरणशास्त्रं स्मारंस्मारं चटुलं विस्मेरं नानटीति पाश्चात्यानां शाब्दिकानां मतिः। तेषामेव प्रतिभाप्रकर्षेण अतिप्राचीना वर्षिष्ठापि वेदभाषा अविच्छिन्नमविकलं शीक्षादिनियता यथापुरं सुरक्षिता वर्वर्तीदानीमपि। भगवतः पाणिनेरष्टाध्यायी हि प्रतीच्यां प्रचलन्ती भाषाशास्त्रमाधुनिकमजीजनत्॥

प्रतीच्यामप्यनन्तरं प्लेटोमिश्रात्, Aristotle प्रभृतयः किंचिदिव भाषाविचारस्य शास्त्रतां संपादयामासुः। अलक्साण्ड्रिया शाब्दिकसमितिः (The philological school of Alexandria) प्राचीनकाव्यव्याख्यानाय भाषां प्राचीनां यत्किंचिदिव विभज्य क्रोडीचकार। तदनुयायिनश्च रोमकाः किंचिदिव तत्र परिश्रम्य विश्रान्ताः, येन प्राचीने प्रतीचीमण्डले भारतदेश इव नैव फलांशे भाषाशास्त्रमुदजृम्भत॥

Middle Ages and Renaissance.

अथ च सन्ध्ये काले भाषाशास्त्रे नैवासीद्विशेषः। विशिष्य तदानीं लेटिन्भाषैव मतौपयिकत्वेन समधीता, नैव शास्त्रत्वेन। सति चैवं लेटिन्भाषाविषये, कैव कथा तन्मातृभाषां प्रति॥

पुनर्नवीकरणसमये किंचिदिव विशेषः समजनि। ग्रेकभाषापरिचयः तद्भाषाव्याकरणं किंचिदिव प्रचारयामास॥

प्राचां हि मतं—शब्दः साक्षादीश्वरप्रदत्त इति । नैतत्सम्यक्—ईश्वरवत्साकल्याभावाद्भाषाया इति Herder. जीवकलितैव सा । भाषाबीजं च मानुषान्तरभाव एव । स एव मनुष्यं भाषोन्मुखं करोति, कठोरगर्भ इव प्रजावतीं प्रसवोन्मुखीम् । मनुष्यः, अथवा सर्वोऽपि प्राणिवर्गो ध्वनिरूपेणैव स्वाशयमाविष्करोतीति सर्वानुभूतिः । परं त्वियान्विशेषः—मनुष्यस्तत्तद्ध्वनिविशेषान्सम्यक् परिष्कृत्य व्यक्ततया नैयत्येन व्याकृततया च तत्तच्छब्दानां तत्तदर्थेषु शक्तिं गृहीत्वा व्यवहरति । अयमेव मनुष्यतिर्यग्विभाजकोपाधिर्भवति । किंचास्मिन्मते सर्वास्वपि भाषासु न केवलं सुशिक्षितासु, अपि तु देशीष्वपि स्वविषये चारिमा अस्त्येव । सर्वशुक्ला हि सरस्वती । सर्वत्र विद्यते ततः काव्यशोभा ॥

A. D. 1794 वत्सरे Berlin वास्तव्यः Jenisch नामा अनवद्या भाषा (Ideal Language) इति विषयमधिकृत्य लेखं विलिख्य पारितोषिकमलभत । अस्मिन् तत्तद्भाषासु तत्तद्भाषाव्यवहर्तॄणां तत्त्वं प्रतिबिम्बति । वाचा हि मनुष्यः । असंस्कृतस्य भाषा असंस्कृता रूक्षा च । संस्कृतस्य नागरिकस्य भाषा संस्कृता मधुरा चेत्येवम् । गीर्वाणी-लेटिन-ग्रीक्-जर्मन्-आङ्ग्ली-फ्रेन्च् आदिभाषासु तत्तद्व्यवहर्तॄणां स्वभावविशेषाः संक्रामन्त्येव । उत्कर्षोपाधिरस्मिन् मते— 1. Richness 2. Energy or emphasis 3. Clearness 4. Euphony. तत्र तत्तत्पदार्थनिरूपणे स्वल्पयासेनावगन्तुं भाषायाः Richness इति कथ्यते । तस्याश्च Energy देशेषु व्याहरणे प्रतिभावत्सु कविषु च वर्तते. Clearness

करणमेव तदर्थमैदंपर्येण शीलितम् । लेटिन्व्याकरणानुगुणमेव भाषान्तराण्यपि व्यकारिषत । अद्यत्वेऽपि प्रतीचीभाषामण्डलं लेटिन्व्याकरणसच्छायमेव । अत्रेदमवधेयम्—यत् भाषान्तराणां लेटिन्भाषानुगुण्यसंपादनं नाम संकोच एव ; यश्च संकोचः तत्तद्भाषावैशाल्यमचूचुरत्, यद्यपि लाघवानुगृहीतः ॥

## ॥ अष्टादशशतकीया चर्चा ॥

भाषोत्पत्तिविचारश्च अष्टादशशतकीयमनीषिणां मनांसि अध्यासामास । तत्र Rousseau नामा एवमभिप्रेयाय । आद्या मानुषा मिलित्वा व्यवहारार्थमैदंपर्येण परस्परसंकेतेन भाषामधिजग्मुरिति । नैतत्सम्यक्—प्राथमिकश्च पुरुषः एकः उत अनेके इत्यनिर्धारणात्, तादृशसंकेतरूपव्यवहाराय भाषान्तरमपेक्षितमिति अनवस्थानात्, तत्तद्देशावच्छेदेन भाषानन्त्याच्च ॥

Condillac नामापर एवमुल्लिलेख । भाषाविहीनः पुरुषः स्त्री च स्वान्तरभावविशेषान् परस्परं बोधयितुं वाचिकं ध्वनिमाङ्गिकचेष्टया साकमाविश्चक्रतुः, तयोश्च अपत्यानि ततोऽप्यधिकं व्यक्ततरं चेत्येवं परम्परया नवीना ध्वनिविशेषाः ततः शब्दविशेषाश्चेत्येवं क्रमेण भाषा समुत्पन्नेति ॥

अष्टादशशतके शब्दचर्चाप्रवणेषु प्रधानः Johann Gottfried Herder A. D. 1772 तमे वत्सरे भाषोत्पत्तिमधिकृत्य ग्रन्थं विलिख्य Berlin विद्यासमितेः पारितोषिकं लेभे । तस्मिन् भाषामधिकृत्य प्राचीनानि मतानि खण्डितानि दृश्यन्ते ।

रतदेशमागतैः France, England देशीयैर्न केवलं धनसंपदः अपि तु विद्यासंपदोऽपि प्रतीचीं नीताः । विशिष्य विदेशीयानां पण्डितानां मनः संस्कृतभाषागरिम्णाऽऽकृष्टम्. A. D. 1767 वत्सरे फ्रान्स्देशीयः Coeurdoux नामा रोमकक्रैस्तवमताचार्यः, संस्कृतधातूनां लेटिन्भाषाधातूनां च साजात्यं क्रोडीकृत्य लेखं कंचित् फ्रान्स्विद्यासमित्यै विससर्ज. A. D. 1796 वत्सरे Sir William Jones संस्कृतभाषासौन्दर्येणावर्जितस्वान्तः लेटिन्ग्रीक् भाषापेक्षयापि संस्कृतस्यैवोत्कर्षं सरलं रमणीयं च समर्थयामास ॥

"The Sanskrit language, whatever be its antiquity, is of a wonderful structure; more perfect than the Greek, more copious than the Latin and more exquisitely refined than either; yet bearing to both of them a stronger affinity, both in the roots of verbs and in the forms of grammar, than could possibly have been produced by accident; so strong, indeed, that no philologer could examine them all three without believing them to have sprung from some common source, which, perhaps, no longer exists."—Sir William Jones.

यद्यप्ययं संस्कृतभाषाप्रणयी तथापि भाषान्तरपर्यालोचनेन भाषाशास्त्रं नाधिकं विस्तारयामास ॥

Friedrich von Schlegel.

A. D. एकोनविंशशतकस्य आद्ये भागे भाषाशास्त्रप्रवर्तकेषु प्रसिद्धः Fr. von Schlegel, योऽयं A. D. 1808 वत्सरे

व्युत्पत्त्याधायकग्रन्थेषु शाब्दबोधग्रन्थेषु विद्यते. Euphony च मञ्जुलाक्षरपदग्रथनाचातुर्याम् ॥

अत्रेदमवधेयम्—यत् भाषाणां परस्परतोलनं नैव सम्यक्, स्वस्वविषये तत्तद्भाषाणामुत्कर्षसत्त्वात् । तथापि तादृशतोलनेन उत्कृष्टभाषानिश्चये यदि स्यात्कश्चित्प्रवणः तर्हि Jenisch विमर्शोक्ताश्चत्वारोऽपि गुणा मनस्यनुसंधातव्याः ॥

## ॥ एकोनविंशशतकस्याद्यो भागः ॥

क्रिस्तोः परमेकोनविंशशतके भाषाशास्त्रं प्रतिष्ठामियायेति नैव वितथं स्यात् । अश्रुतदृष्टचर्यो भाषा विचारविषयीकृताः । भाषाचरित्रं च सप्रमाणं शीलितम् । तत्तद्भाषाणां सावधानं स्वभावविशेषाः, परस्परं साजात्यवैजात्ये, सर्वभाषाणामानुगत्यं च अधिगतम् । न केवलं भाषाघटकपदानां सौष्ठवासौष्ठवे, ईदृक्तेयत्ते च, अपि तु कथंकारं तादृक्ता—इत्यपि च विचारः प्रक्रान्तः । कथंकारमीदृक्ता—इत्येव विचारः Historical or Comparative method इति व्यवह्रियते । अयमेव च पन्था भाषाशास्त्रे शाब्दिकैरवलम्ब्यते । ईदृक्तेयत्ताविचारः केवलं Descriptive method इति, योऽयं तत्तद्भाषाव्याकरणेषु भाषान्तरपर्यालोचनं विना अवलम्ब्यते तत्तच्छाब्दिकैः । पूर्वोक्त एव Historical method एकोनविंशशतकेऽधिगतः ॥

समयेऽस्मिन् संस्कृतभाषाधिगमनं तत्प्रचारश्च प्रतीच्यां भाषाशास्त्रमुत्तेजयामास । उद्योगिभिर्विदेशीयैर्धनसंचयार्थं भा-

Ueber die sprache und weisheit der Indier नामक-मन्यांश्च ग्रन्थान्व्यररचत् । अयं Paris नगरे कतिपयवत्सरान् संस्कृतभाषां सम्यगध्यैष्ट । संस्कृतभाषाध्ययनेन सर्वोऽपि प्रतीची-भाषाप्रपञ्चः पुनर्नवीभवेदिति हि तन्मतम् । तथैव चाभूत् । प्राची-मण्डलमण्डनायितस्य संस्कृतस्य प्रतीचीमण्डलभाषाणां च परस्परं साजात्यं प्रदर्श्य तादृशं साजात्यं नैवाकस्मिकं, परं तु सौदर्य-प्रभवम्, तादृशसोदरभाषाविशेषाणां परस्परभावनया आनुगत्येन व्याकरणमेव Comparative Grammar इति कथ्यते इति समर्थयामास । मतमेतदवलम्ब्यैव अर्वाचीनैः शाब्दिकप्रवरैः तत्तद्भाषाः पर्यालोच्य तासामनुगतनयोन्नयनं कृतमासीत् ॥

Schlegel तावत् समग्रमपि भाषाप्रपञ्चं द्विधा विभेजे । संस्कृतभाषा तद्भवाश्च एकम् । तद्भिन्ना अपरम् । संस्कृतभाषा तद्भवाश्च Organic Languages इति कथ्यन्ते । अस्मिंश्च मते संस्कृतभाषैव मातृभाषा स्यात् न ततोऽप्यतिरिक्ता प्राचीना ॥

तत्तद्भाषाभेदेन च तत्तद्भाषोत्पत्तिभेदमभिप्रैत्ययम् । Manchu भाषा तावत् प्राकृतरवानुकारमुदियाय, अनुकरणशब्द-(Onomatopoeia) भूयिष्ठत्वात्तस्याः । संस्कृतभाषा परं सुशि-क्षिता सर्वाङ्गसुन्दरी न प्राकृता । अत एव सा गैर्वाणीति व्यपदे-शमर्हति । तादृशप्राचीनभाषायाः सर्वाङ्गसौन्दर्यं तावत्प्राचीनकाले साङ्घिकोत्कर्षं नागरिकतापौष्कल्यमकर्कशत्वं, किं बहुना सर्वथा साकल्यं गमयति । अत एव च स्याद्गैर्वाणी मातृभाषा—इति ॥

Icelandic, Anglo-Saxon, Frisian, Lapp, Danisl Spanish, Italian, Gothic व्याकरणानि सविमर्शं क्रोडीकृत रचयामास. Gothic दीर्घांचं प्रत्येव किंचिदिवास्खलत्, य स्खलनमर्वाक् Grimm समीचकार। इत्विषये Grimm अपेक्षय Rask विदुषो नैशित्यम् । तत्तद्भाषाव्यवहर्तृभिर्मिलित्वा तत्तद्भाष स्वनितरसाधारणं पाण्डित्यं वैशद्यं च संपादितमनेनेति शाब्दि कानां धुरि गणनीय एवायम् ॥

Jacob Grimm.

A. D. 1785 वत्सरे प्राड्विवाकपुत्रत्वेन जनित्वा Grimı व्यवहारकौशलं संपाद्य प्राचीनजर्मन्भाषाप्रावीण्यमाप । अन्तत Old German भाषामेव ऐदंपर्येण पर्यालोडयामास । अत्र चा स्वभ्रात्रोपकृतः । अस्य च अधिगमनानि German भाषामे विशिंषन्तितराम् । व्याकरणे Descriptive प्रकारं नैवासाव द्रियते. Historical method तु अमुमावर्जयति ॥

ध्वनिविपर्यासः—Sound-Shift.

Grimm नाम ध्वनिनियमेन केनचित्संबद्धं प्रचाकशीति । अयं च ध्वनिनियमस्तत्पूर्वतया Rask शाब्दिकेनैवाधिगत इति Grimm's Law तावत् Rask's Law इत्येव वक्तुमुचि-तामिति Jespersen. Grimm सिद्धान्तश्चैवम्—

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| Greek | *p* | *b* | *f* | *t* | *d* | *th* | *k* | *g* | *ch* |
| Gothic | *f* | *p* | *b* | *th* | *t* | *d* | *h* | *k* | *g* |
| High G. | *h(v)f* | *p* | | *d* | *z* | *t* | *g* | *ch* | *k.* |

स्थितेः । तथाहि । वेदकालादारभ्य तत्तद्भारतीयसंघानां तत्तद्देशकालावच्छेदेन आहारव्यवहारादीनां भिन्नभिन्नत्वेऽपि तत्तद्भाषानु तत्तत्संघस्थितिः सुसंक्रान्ता । अत एव देशादिचरित्रविमर्शकैः सा सा भाषा सादरं सेव्यते । तादृशभाषाणां यथावदधिगमने अन्तरा व्याकरणज्ञानं गत्यन्तरं नास्ति । यदि च तत्तद्भाषाव्याकरणानि परस्परं भाव्यन्ते तर्हि भाषाणामानुगत्यतदभावौ विपरिणामनिष्ठिती इत्येवमादि सुगमावगमं स्यात् ॥

एवंरीत्या Rask तावत् प्राचीन Icelandic भाषायाः Gothic भाषायाश्च परस्परसंबन्धं सविमर्शं प्रदर्शयति. Gothic भाषाणां मूलमस्मिन्मते Greek भाषेति नैकभाषाणामेकप्रभवत्वं, तथा भाषाकुटुम्बकं च विशदमयं प्रतिपादयति । भाषाकुटुम्बकानि च विभजतेऽयम्—Indian, Iranic, Thracian, Sarmatian, Gothic and Keltic. एवंरीत्या विशदं विभागः तत्पूर्वतया Rask विमर्शकेनैवाकारि । तथैवायं Finno-Ugrian भाषाकुटुम्बकमपि विभेजे, योऽयं विभाग इदानीमप्यतिरस्कृतं वरीवर्ति । भारतदेशमाहिण्डमानः भारतभाषाणां Zend भाषायाः Persian भाषायाः संबन्धादि परिश्चकार । द्राविडी गैर्वाणी च अत्यन्तं भिन्नेति च प्रथमं विशदीचकार । Zend भाषां विमृश्य लिपिविशेषानधिकृत्य प्राचीकशच्च स्वाशयम्. A. D. 1816-23 वर्षेषु Sweden, Finland, Russia, Persia, India देशेषु आहिण्डमानो देशभाषाः समभीयानः अन्ततः आकिंचन्यचिन्तापीडितः 1832 वर्षे पञ्चतामाप ॥

Bopp विमर्शकस्य मुख्योद्देश्यं च पदानां निष्पत्तिप्रकारनिर्धारणं, यदयं संस्कृतपदनिष्पत्तिप्रकारं पुरतः कृत्वैवाधिजगाम, संस्कृतस्यैव भाषान्तरापेक्षयातिवेलमुपकारकत्वात् ॥

भाषायां सर्वत्रापि Bopp स्वाचार्य Silvestre de Sacy मतवाक्यलक्षणानुसारं असधातोर्भूधातोर्वांशं पश्यति । तथा चास्मिन् मते तिङादिप्रत्यया अपि जातुचित् इतरानपेक्षं पदान्येव प्रकृतयः न तु प्रत्ययाः । यथा Latin. *ibo* < *i*, go +*b*, will + *o*, I. तथा असधातुश्च *scrip-s-i* इत्यादिलेटिन्-लिङर्थकेषु *e-tu-p sa* इत्यादि Greek—लुङर्थेषु *tup-s-o* इत्यादिभविष्यदर्थकेषु च वर्तते । यथा अस्‌धातुस्तथैव भूधातुरपि धात्वन्तरस्वरूपनिर्णये कुञ्चिकायते. *da-bam* इति Latin लङर्थेषु, *da-bo* इत्यादि लेटिन्-भविष्यदर्थकेषु च वर्तते भूधातुः । तथा च भाषा नाम निपुणा कलावती शकलितान् शब्दखण्डान् श्रवणसुभगमारचय्य सन्धिच्छिद्रादीन् समीकृत्य भिन्नानप्यभिन्नानिव, नैकप्रभवानप्येकप्रभवानिव च परिष्करोति ॥

Grimm मतवासनावासितान्तःकरणश्चायं Bopp संस्कृते अकारस्य भूयोदर्शनेन मातृभाषायां *a*, *e*, *u* इति अच्त्रयमेवाङ्गीचकार, यदिदं मतं तालव्यनियमाधिगमनेनार्वाचीनैः *a*, *e*, *o* इत्येव पक्षमुत्थाप्याधरीचक्रे ॥

धातुस्वरूपविचारणाप्रकरणे Bopp एवमभिप्रैति—यत्—संस्कृतग्रीक्भाषादिष्वेव एकाच्का धातवः, यथा *i* प्रभृतयो दृश्यन्ते । नैव Semitic भाषायां, अक्षरत्रयघटितत्वादेकैकस्यापि

प्रकारान्तरेण यथा—

| | | | |
|---|---|---|---|
| Greek | Tenuis | Media | Aspirate |
| Gothic | Aspirate | Tenuis | Media |
| High G. | Media | Aspirate | Tenuis. |

शीक्षायां तावत् Grimm शिक्षिततया नाङ्गीक्रियते शाब्दिकैराधुनिकैः. *sch* इत्यत्र *s+c+h* इत्येवमादि हि पश्यति Grimm. Ablaut, Umlaut, strong, weak प्रभृतयश्च परिभाषाः Grimm विदुषैवाधिगताः ॥

एवं Berlin विश्वविद्यालये शब्दशास्त्रमध्यापयन्नेव कालं निनाय। विशिष्य शब्दतत्त्वानि विचार्य शाब्दबोधग्रन्थांश्च अन्ततो रचयित्वा प्रथामाप ॥

## Franz Bopp.

A. D. 1791 वत्सरे जनित्वा एकविंशतितमे वयसि प्राचीभाषामण्डले पिपठिषुः Franz Bopp तावत् Paris नगरमासाद्य संस्कृतभाषापठनप्रवणोऽभूत्. A. D. 1816 वत्सरे पुनः भाषाशास्त्रमधिकृत्य ग्रन्थरत्नं च निर्ममे, यत एव भाषाशास्त्रजनिर्जर्मन्देशीयैः प्रायशोऽभ्युपेयते। अनारतगैर्वाणीपरिचयश्च तस्मिन्नाधुनिकशाब्दिकतल्लजत्वमावहत्। गैर्वाणीव्याकरणग्रन्थाश्च कतिचनानेन सविमर्शं प्रकाश्यन्त प्रतिन्यबध्यन्त च. A. D. 1822 वत्सरे Berlin विद्यासमित्यां शाब्दिकाचार्यकं निरुह्य प्रतिभोत्कर्षेण कृतीर्वह्वीः लेखांश्च बहून्विससर्ज. A. D. 1867 वत्सरे पञ्चतामाप ॥

जङ्गमा । अतश्च सरस्वती असंस्कृता सुसंस्कृता वा सर्वशुक्ला । अत एव नैव हेया, तत्तद्व्यवहर्तृमानसादर्शत्वात्तत्तद्भाषायाः । स्वस्वविषये सर्वापि प्रकृष्टैव । शब्दाश्च प्रथमतः पदार्थानेवावगमयन्ति । अनन्तरमेव संसर्गमर्यादाम् । त्रैविध्येन सा विभागमर्हति—Flexional, Agglutinating, Incorporating इति ॥

## ॥ एकोनविंशशतकस्य मध्यभागः ॥

### K. M. Rapp.

अयं भाषाध्वनिपरिणतीः तत्तत्कालावच्छेदेन विममर्श । तदर्थं च देशाद्देशं परिभ्रमन् भाषाविशेषेषु परिचयं संपाद्य Rask प्रभृतिभ्यः शाब्दिकवरेभ्यो भाषातत्त्वमधिजगाम साक्षात् । अस्य नामापि शाब्दिकसमये अविज्ञातमासीत्, यत् अन्ततः Jespersen प्रकाशयामास ॥

### J. H. Bredsdorff.

अयं च Rapp पण्डितवत् शीक्षायां नैपुण्यमाप । भाषाध्वनिपरिणतयः कथं संपद्यन्त इत्यत्र अयमेवमभिप्रैति— (१) यथावदश्रवणम् (२) यथावदस्मरणम् (३) स्थानप्रयत्नादिवैकल्यम् (४) तन्द्रालुता (५) सादृश्यपक्षपातित्वम् (६) उच्चारणसौष्ठवाय अतियत्नः (७) नूत्नाशयाविष्करणाय नूत्नसामग्र्यावश्यकता इति ॥

### August Schleicher.

अस्य च सरला निर्वचनसरणिः बहुभाषापरिचयः चर्चाप्रावण्यं च शाब्दिकसमये तं प्रमुखीकुर्वन्ति । मनुष्यविभाजकोपाधिश्चास्य मते नैव नरशिरःकपालं, न वा रोमवर्णः, नापि वाह्यं

धातोस्तस्याः। अत एव च तादृशैकाच्कधातुभूयिष्ठेषु भाषाविशेषेषु प्रकृतीनामवान्तरपरिणामः (Flexion) भवति सुलभं भूयसा। न तथा Semitic धातुषु—इति। किंचायमनुपदमेव वदति यत् प्रकृतिप्रत्यययोर्मेलनेनापि भूयसा परिणामा भवन्ति। सर्वास्वपि भाषासु उभयथा परिणामा भवन्ति विहाय चीनभाषां यत्र प्रकृतिप्रत्यययोर्मेलनेनैव भवन्ति—इति। अत्रेदं बोध्यम्—न इयत्तया भाषाः Flexional, Agglutinating, Isolating इति विभागमर्हन्ति, सर्वत्रापि सर्वेषां विद्यमानत्वात्—इति Bopp विमर्शकस्याशयः॥

Grimm तावत् Ablaut विपरिणामस्य बुद्धिपूर्वकत्वमभिप्रेयाय. Bopp तु पदान्तस्वाभाव्यप्रयुक्तत्वम्; यथा—

| | | |
|---|---|---|
| Sanskrit | *veda* | *vidima* |
| Gothic | *vait* | *vitum* |
| Greek | *oida* | *idmen.* |

अर्वाचीनास्तु स्वरप्रयुक्तत्वमिच्छन्ति। एवं Grimm अपेक्षया Bopp विदुषः अर्वाचीनैरत्र संगानमिति ध्येयम्॥

Wilhelm von Humboldt 1767—1835.

अयं च राज्यतन्त्रनिपुणोऽपि शब्दशास्त्रेऽपि कृतमतिः भाषातत्त्वमधिकृत्य बहून्प्रबन्धान् रचयामास.। भाषा नाम अस्य मते नैव परिष्कृतः पदार्थविशेषः, परं तु अविच्छिन्नं वर्धमानः क्रियाविशेषः। आन्तरभावाविष्करणार्थं हि अक्षरावलम्बिनी मानसी क्रिया भाषा। सा च न स्थावरा, अपि तु

मासुश्च, येन शाब्दिकसमये नूला विषयविशेषा अधिगताः, संदिग्धाः परिष्कृता वा । तादृशेषु Westergaard, Benfey, Miklosich, Zeuss, Diez प्रभृतयो विशिष्य संमुखीभवन्ति ॥

Max Muller.

भाषाशास्त्रे तथा प्राचीकलानिधौ विनोदरसिकानां, तादृशकलाप्रचारणायां बद्धकङ्कणानां मध्ये तत्र भवान् Max Muller तावदग्रगण्य एव । भाषाशास्त्रं च सरलसरलया सरण्या उपन्यास्थत्, येनोपन्यासेन भाषाशास्त्रे रुचिः परिवर्धिता । यद्यपि Max Muller महाशयेन प्रवर्तिताः केचिन्नयविशेषा इदानीं जरन्तो नाङ्गीक्रियन्ते तथापि तस्य संस्कृतभाषायां परिनिष्ठितिः, भाषान्तरप्रावीण्यं, पण्डितसर्वस्वभूता समदृष्टिश्च आधुनिकसभायामस्याग्रताम्बूलमावहन्ति ॥

तथा Max Muller समकालिकः W. D. Whitney विद्वान् प्रथमं बहुत्र तं खण्डयामास, यद्यपि तस्यैवास्य प्रवचनसरणिर्नैव भासुरा । अस्य मते भाषा नाम मानुषसङ्घेन सार्कं क्रमश एव वर्धते । न तस्या अनिर्वचनीया शक्तिः केनापि दत्ता—इति ॥

## ॥ एकोनविंशशतकचरमभागः ॥

A. D. एकोनविंशशतकचरमभागे Brugmann, Delbruck, Osthoff, Paul प्रभृतयः शाब्दिकप्रकाण्डाः भाषाशास्त्रहितैकजागृवयः प्राचीनैः प्रवर्तितैरनुमानैः भाषाणां परस्परभावनय

यत्किंचित्, अपि तु भाषैव, आभ्यन्तरत्वात्तस्याः । अयमपि भाषां Isolating, Agglutinating, Amalgamating इति त्रैविध्येनैवाभिप्रैति. Flexional or Amalgamating अवस्थैव परमावधिर्भाषावृद्धेः । तत्र Isolation, Agglutination अवस्थे परं सोपानायेते—इति च । भाषा तावत् तत्त्वेन वर्धते, यावत् साहित्यप्रपञ्चो नोल्लसति, उपकरणभूतत्वादिदानीं भाषायाः ॥

Schleicher तावत्संस्कृतादिप्राचीनभाषास्वरूपमवलम्ब्य मातृभाषास्वरूपमप्यनुमाय भाषापरिणतिचरित्रमपि प्रदर्शयामास । अर्वाचीनाः परं Gabelentz प्रभृतयः तादृशमातृभाषाधिगमने सामर्थ्यभावादिदानीं तादृशीं दृढप्रतिपत्तिं न प्रदर्शयन्ति ॥

Curtius (1820-85).

अयं ग्रीकभाषायां कृतपरिश्रमः, तत्र धातुपाठेषु तथा शब्दनिष्पत्तिमधिकृत्य च संदिग्धान्विषयान्विशदीचकार. Brugmann प्रभृतिभिः स्वशिष्यैरेवायं ध्वनिनियमविषये बहुधा खण्डित इति शिष्यैरेव पराजितः ॥

Johan Nikolai Madvig.

शब्दानामनिर्वचनीयशक्तिवादिनश्चानेन खण्डिताः । तत्तदर्थविशेषबोधकत्वं च शब्दानामक्षराणां च—यथा 'आ' प्रत्ययस्य स्त्रीत्वद्योतकत्वं, अनिर्वचनीयशक्तिमत्त्वेनेति नाभ्युपगतमनेन ॥

किंचास्मिन्समये तत्तद्भाषासु कृतपरिश्रमाः पाश्चात्यशाब्दिकप्रवराः प्रादुर्बभूवुः, परस्परमाशयान्भावयित्वा परिवर्तया-

अनुगतान्नयानधिगत्य भाषाशास्त्रस्य शास्त्रत्वं संपादयामासुरिति अहो तेषामाहोपुरुषिका । सर्वमिदं विशदं क्षोदक्षमं भवति तत्तद्भाषाव्याकरणपरस्परभावनया । अपवादाभासा न दृश्यन्ते, अपवादाश्च द्रढयन्त्युत्सर्गमिति Max Muller. एतदनुसारेणैव Whitney, Benfey प्रभृतयोऽपि । सर्वभाषापर्यालोचनया मातृभाषायामनुमानबलेन ग्रन्थानपि रचयन्ति केचन! प्राचीनानां गतजालानि शोधितानि परिष्कृतानि च । ध्वनिनियमा अनुगता आतिदेशिकस्वभावनियमश्च मूर्धाभिषिक्ताः ॥

Semantics, Syntax, Morphology विभागेषु शाब्दिकमनो निर्व्याजं व्यधायि । न केवलं व्याकरणशिक्षितभाषासु, अपि तु प्राकृतैरवलम्बितेषु भाषानिकुरुम्बेषु च भाषातत्त्वरत्नान्यधिगतानि. Bally, Baudouin de Courtenay, Bloomfield, Breal, Delbruck, van Ginneken, Hale, Henry, Hirt, Meringer, de Saussure, Sweet, Uhlenbeck, Wackernagel, Jespersen प्रभृतयश्च शाब्दिकप्रकाण्डा बहूपकृतवन्तः शब्दशास्त्रसम्यक्तासंपादने । प्रायशश्च जर्मन्देशीयानामेव शाब्दिका आधमर्ण्यभारं भरन्ति । भाषाशास्त्रं च आधुनिकं जर्मन्देश एव समजनि—इति नात्युक्तिः स्यात् ॥

॥ भाषाशास्त्रप्रवेशिनी समाप्ता ॥